विद्याधरा च बिम्बोष्ठी कैलासाचलवासिनी ।
विभवा वडवाग्निश्च अग्निहोत्रफलप्रदा ॥१६०॥
मन्त्ररूपा परादेवी तथैव गुरुरूपिणी ।
गया गङ्गा गोमती च प्रभासा पुष्कराऽपि च ॥१६१॥
विन्ध्याचलरता देवी विन्ध्याचलनिवासिनी ।
बहू बहुसुन्दरी च कंसासुरविनाशिनी ॥१६२॥
शूलिनी शूलहस्ता च वज्रा वज्रहराऽपि च ।
दुर्गा शिवा शान्तिकरी ब्रह्माणी ब्राह्मणप्रिया ॥१६३॥
सर्वलोकप्रणेत्री च सर्वरोगहराऽपि च ।
मङ्गला शोभना शुद्धा निष्कला परमाकला ॥१६४॥
विश्वेश्वरी विश्वमाता ललिता वसितानना ।
सदाशिवा उमा क्षेमा चण्डिका चण्डविक्रमा ॥१६५॥
सर्वदेवमयी देवी सर्वागमभयापहा ।
ब्रह्मेश-विष्णु-नमिता सर्वकल्याणकारिणी ॥१६६॥
योगिनी योगमाता च योगीन्द्र-हृदय-स्थिता ।
योगिजाया योगवती योगीन्द्रानन्दयोगिनी ॥१६७॥
इन्द्रादि-नमिता देवी ईश्वरी चेश्वरप्रिया ।
विशुद्धिदा भयहरा भक्त-द्वेषि-भयङ्करी ॥१६८॥
भववेषा कामिनी च भरुण्डाभयकारिणी ।
बलभद्रप्रियाकारा संसारार्णवतारिणी ॥१६९॥

पञ्चभूता सर्वभूता विभूतिर्भूतिधारिणी ।
सिंहवाहा महामोहा मोहपाशविनाशिनी ॥१७०॥
मन्दुरा मदिरा मुद्रा मुद्रा-मुद्गर-धारिणी ।
सावित्री च महादेवी पर-प्रिय- निनायिका ॥१७१॥
यमदूती च पिङ्गाक्षी वैष्णवी शङ्करी तथा ।
चन्द्रप्रिया चन्द्ररता चन्दनारण्यवासिनी ॥१७२॥
चन्दनेन्द्र-समायुक्ता चण्डदैत्यविनाशिनी ।
सर्वेश्वरी यक्षिणी च किराती राक्षसी तथा ॥१७३॥
महाभोगवती देवी महामोक्ष-प्रदायिनी ।
विश्वहन्त्री विश्वरूपा विश्व-संहारकारिणी ॥१७४॥
धात्री च सर्वलोकानां हितकारणकामिनी ।
कमला सूक्ष्मदा देवी धात्री हरविनाशिनी ॥१७५॥
सुरेन्द्रपूजिता सिद्धा महातेजोवतीति च ।
परारूपवती देवी त्रैलोक्याकर्षकारिणी ॥१७६॥
इति ते कथितं देवि ! पीतानामसहस्रकम् ।
पठेद् वा पाठयेद् वाऽपि सर्वसिद्धिर्भवेत् प्रिये ! ॥१७७॥
इति मे विष्णुना प्रोक्तं महास्तम्भकरं परम् ।
प्रातःकाले च मध्याह्ने सन्ध्याकाले च पार्वति ! ॥१७८॥
एकचित्तः पठेदेतत् सर्वसिद्धिर्भविष्यति ।
एकवारं पठेद् यस्तु सर्वपापक्षयो भवेत् ॥१७९॥

द्विवारं प्रपठेद्यस्तु विघ्नेश्वरसमो भवेत् ।
त्रिवारं पठनाद् देवि ! सर्वं सिध्यति सर्वथा ।।१८०।।
स्तवस्याऽस्य प्रभावेण साक्षात् भवति सुव्रते ! ।
मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।।१८१।।
विद्यार्थी लभते विद्यां तर्क-व्याकरणान्विताम् ।
महित्वं वत्सरान्ताच्च शत्रुहानिः प्रजायते ।।१८२।।
क्षोणीपतिर्वशस्तस्य स्मरणे सदृशो भवेत् ।
यः पठेत् सर्वदा भक्त्या श्रेयस्तु भवति प्रिये ! ।।१८३।।
गणाध्यक्षप्रतिनिधिः कविकाव्यपरो वरः ।
गोपनीयं प्रयत्नेन जननी-जारवत् सदा ।।१८४।।
हेतुयुक्तो भवेन्नित्यं शक्तियुक्तः सदा भवेत् ।
य इदं पठते नित्यं शिवेन सदृशो भवेत् ।।१८५।।
जीवन् धर्मार्थभोगी स्यान्मृतो मोक्षपतिर्भवेत् ।
सत्यं सत्यं महादेवि ! सत्यं सत्यं न संशयः ।।१८६।।
स्तवस्यास्य प्रभावेण देवेन सह मोदते ।
सुचित्ताश्च सुराः सर्वे स्तवराजस्य कीर्त्तनात् ।।१८७।।
पीताम्बरपरीधाना पीतगन्धानुलेपना ।
परमोदयकीर्त्तिः स्यात् परतः सुरसुन्दरि ! ।।१८८।।

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिकृतबगलोपासनपद्धतौ
श्रीउत्कटशम्बरे नागेन्द्रप्रयाणतन्त्रे षोडशसहस्रे
विष्णु-शङ्कर-संवादे बगला (पीताम्बरी)-
सहस्रनामस्तोत्रं समाप्तम् ।

●

# पीताम्बरोपनिषत्

ॐ अथ हैनां ब्रह्मरन्ध्रे सुभगां ब्रह्मास्त्रस्वरूपिणीमाप्नोति। ब्रह्मास्त्रा महाविद्यां शाम्भवीं सर्वस्तम्भकरीं सिद्धां चतुर्भुजां दक्षाभ्यां कराभ्यां मुद्गरपाशौ वामाभ्यां शत्रुजिह्वा वज्रे दधानां पीतवाससं पीतालङ्कारसम्पन्नां दृढीभूतपीनोन्नत-पयोधरयुग्माढ्यां तप्तकार्तस्वरकुण्डलद्वयविराजितमुखाम्भोजां ललाटपट्टोलसत्पीतचन्द्रार्धमनुबिभ्रतीमुद्यद्दिवाकरोद्योतां स्वर्ण-सिंहासनमध्यकमलसंस्थां धिया सञ्चिन्त्य तदुपरि त्रिकोण-षट्कोण-वसुपत्रवृत्तान्तः षोडशदलकमलोपरि भूबिम्बत्रय-मनुसन्धाय तत्राद्ययोन्यन्तरे देवीमाहूय ध्यायेत्।

योनिं जगद्योनिं समायमुच्चार्य शिवान्ते भूमाग्रबिन्दुमिन्दु-खण्डमग्निबीजं ततो वरुणाङ्कगुणार्णमत्रियुतं स्थिरामुखि इति सम्बोध्य सर्वदुष्टानामिदं चाभाष्य वाचमिति मुखमिति पद-मिति स्तम्भयेति वोच्चार्य जिह्वां वैशारदीं कीलयेति बुद्धिं विनाशयेति प्रोच्चार्य भूमायां वेदाद्यं ततो यज्ञभूगुहायां योज-येत्। स महास्तम्भेश्वरः सर्वेश्वरः। स सेनास्तम्भं करोति। किं बहुना विवस्वद्धृतिस्तम्भकर्ता सर्ववातस्तम्भकर्तेति। किं दिवाकर्षयति। स सर्वविद्येश्वरः सर्वमन्त्रेश्वरो भूत्वा पूजाया आवर्तनं त्रैलोक्यस्तम्भिन्याः कुर्यात्।

अङ्गमाद्यं द्वारतो गणेशं बटुकं योगिनीं क्षेत्राधीशं च पूर्वादिकमभ्यर्च्य गुरुपङ्क्तिमीशासुरान्तमन्तः प्राच्यादौ क्रमानुगता बगला स्तम्भिनी जृम्भिणी मोहिनी वश्या अचला चला दुर्धरा अकल्मषा आधारा कल्पना कालकर्षिणी भ्रमरिका मदगमना भोगा योगिका एता ह्यष्टदलानुगताः पूज्याः ।

ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही नारसिंही चामुण्डा महालक्ष्मीश्च । षडचोनिगर्भान्ता डाकिनी-राकिनी-लाकिनी-काकिनी-शाकिनी-हाकिनी वेदाद्यस्थिरमायाद्याः समभ्यर्च्य शक्राग्नि-यम-निर्ऋति-वरुण-वायव्य-धनदेशान-प्रजापति-नागेशाःपरिवाराभिमताःस्थिरादिवेदाद्याःसवाहनाः सदस्त्रका बाह्यतोऽभ्यर्च्यतां योनिं रति-प्रीति-मनोभवा एताः सर्वाः समाः पीतांशुका ध्येयाः । तदन्तमूलायां बलादि-षोडशानुगताः पूज्याः नीराजनैः । स हैश्वर्ययुक्तो भवति ।

य एनां ध्यायति स वाग्मी भवति । सोऽमृतमश्नुते । सर्वसिद्धिकर्ता भवति । सृष्टि-स्थिति-संहारकर्ता भवति । स सर्वेश्वरो भवति । स तु ऋद्धीश्वरो भवति । स शाक्तः स वैष्णवः स गणपः स शैवः । स जीवन्मुक्तो भवति । स संन्यासी भवति । न्यसनं न्यासः सम्यङ् न्यासः संन्यासः । न तु मुण्डितमुण्डः । षट्त्रिंशदस्त्रेश्वरो भवेत् । सौभाग्यार्चनेनेति प्रोतं वेद । ॐ शिवम् ।

इति बगलोपासनपद्धतौ पीताम्बरोपनिषत् समाप्ता ।

•

# बगलामुखीब्रह्मास्त्रम्

ॐ अस्य श्रीबगलामुखीस्तोत्रमन्त्रस्य भगवान् नारदऋषिः, महामाया बगलामुखी देवता, ह्लीं बीजम्, स्वाहा शक्तिः, मम सम्मुखानां विमुखानां वाङ्-मुख-स्तम्भनार्थं महामाया बगलामुखीप्रीत्यर्थं जपे विनियोगः ।

गम्भीरां च मदोन्मत्तां स्वर्ण-कान्ति-समप्रभाम् ।
चतुर्भुजां त्रिनयनां कमलासन-संस्थिताम् ।। १ ।।
मुद्गरं दक्षिणे पाशं वामे जिह्वां च कीलकम् ।
पीताम्बरधरां सान्द्र-दृढ-पीनपयोधराम् ।। २ ।।
हेम-कुण्डलभूषां च पीत-चन्द्रार्ध-शेखरीम् ।
पीतभूषण-भूषाङ्गीं स्वर्णसिंहासने स्थिताम् ।। ३ ।।
एवं ध्यात्वा तु देवेशीमरि-स्तम्भन-कारिणीम् ।
महाविद्यां महामायां साधकस्य वरप्रदाम् ।। ४ ।।
यस्याः स्मरणमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात् ।
पीतवस्त्रां सुनेत्रां च द्विभुजां दाहकोज्ज्वलाम् ।। ५ ।।
शिल्प-पर्वत-हस्तां च रिपुकम्पां मदोत्कटाम् ।
वैरी-निर्दलनार्थाय स्मरेत्तां बगलामुखीम् ।। ६ ।।

मध्ये सुधाब्धि-मणिमण्डप-रत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरण-माल्य-विभूषिताङ्गीं
देवीं भजामि धृत-मुद्गर-वैरिजिह्वाम् ।। ७ ।।

जिह्वाग्रमादाय करेण देवीं
वामेन शत्रून् परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन
पीताम्बराढ्यां द्विभुजां नमामि ॥८॥

त्रिशूलधारिणीमम्बां सर्वसौभाग्यदायिनीम् ।
सर्वश‍ृङ्गार-वेषाढ्यां देवीं ध्यायेत् प्रपूजयेत् ॥९॥

चलत्कनक - कुण्डलोल्लसित - चारु - गण्डस्थलां
लसत्कनक-चम्पक-द्युतिमदिन्दु-बिम्बाननाम् ।
गदाहत-विपक्षकां कलितलोल-जिह्वां चलां
स्मरामि बगलामुखीं विमुख-वाङ्-मुखस्तम्भिनीम् ॥१०॥

पीयूषोदधि-मध्य-चारु-विलसद्रत्नोज्ज्वले मण्डपे
[1]यत्सिंहासन-मौलि-पातितरिपुं प्रेतासनाध्यासिनीम् ।
स्वर्णाभां परिपीडितारि-रसनां भ्राम्यद् गदां विभ्रमां
[2]इत्थं पश्यति यान्ति तस्य विलयं सद्योऽथ सर्वापदः ॥११॥

देवि ! त्वच्चरणाम्बुजे[3] वितनुते यः पीत-पुष्पाञ्जलिं
मुद्रां वामकरे निधाय च पुनर्मन्त्री मनोज्ञाक्षरम् ।
पीतध्यानपरोऽथ कुम्भकवशाद् बीजं स्मरेत् पार्थिवं
तस्यामित्रमुखस्य वाग्-गति-मति-स्तम्भो भवेत्तत्क्षणात् ॥१२॥

---

१. 'तत्' इति। २. 'यस्त्वां ध्यायति' इति । ३. '-म्बुजार्चनकृते' इति ।

मन्त्रस्तावदलं विपक्षदलने स्तोत्रं पवित्रं च ते
यन्त्रं वादिनियन्त्रणं त्रिजगतां जैत्रं पवित्रं च चित्रंचते।
मातः ! श्रीबगलेति नाम ललितं यस्याऽस्ति जन्तोर्मुखे
तन्नामग्रहणेन संसदि मुखस्तम्भो भवेद् वादिनाम् ॥१३॥
वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्वविच्च जडति त्वद्यन्त्रणा यन्त्रितः
श्रीनित्ये ! बगलामुखि ! प्रतिदिनं कल्याणि ! तुभ्यं नमः॥१४॥
दुष्ट-स्तम्भनमुग्र-विघ्नशमनं दारिद्र्यविद्रावणं
भूभृत्सङ्गमनं च यन्मृगदृशां चेतःसमाकर्षणम् ।
सौभाग्यैक-निकेतनं मम दृशोः कारुण्यपूर्णे क्षणे
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥१५॥
मातर्भञ्जय मद्विपक्षवदनं जिह्वां चलं कीलय
ब्राह्मीं मुद्रय मुद्रया सुवदने ! गौराङ्गि ! पीताम्बरे !
विघ्नौघं बगले ! हर प्रतिदिनं कारुण्यपूर्णेक्षणे ! ॥१६॥
त्वं विद्या परमा त्रिलोकजननी विघ्नौघ-विच्छेदिनी
योषाकर्षणकारिणी च सुमहद् बन्धैकसंच्छेदिनी ।
दुष्टोच्चाटनकारिणी जनमतः सम्मोहसंधायिनी
जिह्वाकीलन-वैभवा विजयते ब्रह्मास्त्रविद्यापरा ॥१७॥
सङ्कष्टे चोरसङ्घे प्रहरणसमये बन्धने वारिमध्ये
विद्यावादे विवादे प्रकुपितनृपतौ दिव्यकाले निशायाम् ।

वश्यत्वे स्तम्भने वा रिपुवधसमये निर्विषत्वे रणे वा
गच्छंस्तिष्ठंस्त्रिकालं तव पठति शिवं प्राप्नुयादाशु धीरः ॥१८॥

मातर्भैरवि ! भद्रकालि ! विजये ! वाराहि ! विश्वाश्रये
श्रीनित्ये ! त्रिगुणे ! महेशि ! बगले ! कामेशि ! वामे रमे ! ।
मातङ्गि ! त्रिपुरे ! परात्परतरे ! स्वर्गापवर्गप्रदे !
दासोऽहं शरणागतः करुणया विश्वेश्वरि ! त्राहि माम् ॥१९॥

यच्छ्रुतं जपसंख्यानं चिन्तनं परमेश्वरि ! ।
शत्रूणां स्तम्भनार्थाय तद्गृहाण नमोऽस्तु ते ॥२०॥

नित्यं स्तोत्रमिदं मनोरमतरं देव्याः पठेत् सादरं
धृत्वा यन्त्रमिदं तथैव समरे बाह्वोर्गले वा करे ।
राजानो वरयोषितोऽथ करिणः सर्पा मृगेन्द्राः खला-
स्ते वै यान्ति विमोहिता रिपुगणा लक्ष्मीः स्थिरा सर्वदा ॥२१॥

अनुदिनमभिरामं साधको यस्त्रिकालं
पठति भुवनमातुः पूज्यते देववर्यैः ।
भवति परमकृत्या तस्य तुष्टचैव लोके
भवति परमसिद्धा लोकमाता परम्बा ॥२२॥

विद्या लक्ष्मीः सर्वसौभाग्यता च
पुत्राः सम्पद्राज्यमिष्टार्थसिद्धिः ।
मानः श्रेयो वश्यता सर्वलोके
प्राप्ताऽप्राप्ता भूतले त्वत्परेण ॥२३॥

वामे पाशाङ्कुश-शक्ति तस्याधस्ताद्वरदं परशुं च ।
एवं दक्षिणपाणिक्रमतः पद्माभयाक्ष-सूत्र-गदा-रसनानि ॥२४॥
केयूराङ्गद-कुण्डलभूषां बालहिमद्युति-रञ्जितमुकुटाम् ।
तरुणादित्य - प्रतिकौशेयांशुक-बद्धस्तनयुग्म-नितम्बाम् ॥२५॥
कल्पद्रुमाथो हेमशिलायां प्रमुदितचित्तोल्लसत्कान्तिम् ।
पञ्चप्रेतसमारूढां भक्तजनविविध-कामवितरणशीलाम् ॥२६॥
इदं ब्रह्मास्त्रमाख्यातं त्रिषु लोकेषु दुर्लभम् ।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित् ॥२७॥

इति आचार्यपण्डितश्रीशिवदत्तमिश्रशास्त्रिकृतबगलोपासन-
पद्धतौ श्रीमद्ब्रह्मर्षि-नारदविरचितं श्रीबगला-
मुखीदेव्या ब्रह्मास्त्रं सम्पूर्णम् ।

# [1]बगलामुखीमन्त्रप्रयोगः

एवं ध्यात्वा जपेल्लक्षमयुतं चम्पकोद्भवैः ।
कुसुमैर्जुहुयात् पीठे पूर्वोक्ते पूजयेदिमाम् ॥१॥
इत्थं सिद्धमनुर्मन्त्री स्तम्भयेद् देवतादिकान् ।
[2]पीतवस्त्रस्तदासीनः पीतमाल्यानुलेपनः ॥२॥

---

बगलामुखीमन्त्र का अनुष्ठान

देवस्तम्भन—साधक को चाहिए कि, वह बगलामुखी देवी का ध्यान कर, एक लाख जप करने के बाद चम्पापुष्प से हवन कर, सिंहासन पर भगवती बगलामुखी का पूजन करे ॥ १ ॥ इस प्रकार मन्त्र सिद्ध होने पर साधक सभी देवताओं को अपने वश में कर लेता है।

मनुष्यस्तम्भन—स्वयं पीत वस्त्र धारणकर, पीली माला एवं केशरिया चन्दन लगाकर, हल्दी की माला से बगलामुखी के प्रयोग में छत्तीस वर्ण वाले बगलामुखी का एक लाख मन्त्र (ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धि नाशय ह्लीं

---

१. ॐ ह्लीं बगलामुखि ! सर्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धि नाशय ह्लीं ॐ स्वाहा ।

२. तन्त्रान्तरेऽपि—

पीताम्वरधरो भूत्वा पूर्वाशाभिमुखं स्थितः ।
लक्षमेकं जपेन् मन्त्री हरिद्राग्रन्थिमालया ॥
ब्रह्मचर्यरतो नित्यं प्रयतो ध्यानतत्परः ।
प्रियङ्ग्वाश्च रसेनाऽपि पीतपुष्पैश्च होमयेत् ॥
जपमन्त्रप्रयोगेण मन्त्रं चाप्ययुतं जपेत् ।

पीतपुष्पैर्यजेद् देवीं हरिद्रोत्थस्त्रजा जपन् ।
पीतां ध्यायन् भगवतीं प्रयोगेष्वयुतं जपेत् ॥३॥
[1]त्रिमध्वक्त-तिलैर्होमो नृणां वश्यकरो मतः ।
मधुरत्रितयाक्तैः स्यादाकर्षो लवणैर्ध्रुवम् ॥४॥
तैलाभ्यक्तैर्निम्बपत्रैर्होमो विद्वेषकारकः ।
ताल-लोण-हरिद्राभिर्द्विषां संस्तम्भनं भवेत् ॥५॥
आगारधूमं राजीश्च माहिषं गुग्गुलं निशि ।
श्मशानपावके हुत्वा नाशयेदचिरादरीन् ॥६॥

---

ॐ स्वाहा) का जप कर पीत पुष्प से पीतवर्ण वाली बगलामुखी देवी का ध्यान कर पूजन करे ॥ २-३ ॥ मधु, घृत और शक्कर मिश्रित तिल से हवन करने पर मनुष्य अपने वश में होता है ।

आकर्षण—मधु घृत, शक्कर सहित नमक से हवन करने पर प्राणिमात्रका निश्चित ही आकर्षण होता है, यह प्रयोग अनुभूत है ॥ ४ ॥

कलह—तेल में मिले हुए नीम की पत्ती से होम करने पर आपस में झगड़ा होता है ।

शत्रुस्तम्भन—ताड़पत्र, नमकयुक्त हल्दी की गाँठ से हवन करने पर शत्रु स्तम्भित होता है ॥ ५ ॥

अगर, राई, भैंस का घी और गुग्गुल इन वस्तुओं से श्मशान की अग्नि में, रात्रि के समय हवन करने से शीघ्र ही शत्रुओं का नाश होता है ॥ ६ ॥

---

१. त्रिमध्वक्तम्=मधु-घृत-शर्करायुतम् ।

[1]गरुतो गृध्रकाकानां कटुतैलं बिभीतकम् ।
गृहधूमं चितावह्नौ हुत्वा प्रोच्चाटयेद् रिपून् ॥ ७ ॥
दूर्वा-गुडूची-लाजान्यो मधुरत्रितयान्वितान् ।
जुहोति सोऽखिलान् रोगान् शमयेद् दर्शनादपि ॥ ८ ॥
पर्वताग्रे महारण्ये नदीसङ्गे शिवालये ।
ब्रह्मचर्यरतो लक्षं जपेदखिलसिद्धये ॥ ९ ॥
एकवर्णगवीदुग्धं शर्करा - मधु - संयुतम् ।
त्रिशतं मन्त्रितं पीतं हन्याद् विषपराभवम् ॥१०॥

---

उच्चाटन—गीध और कौवे के पंख को सरसों के तेल में मिलाकर चिता पर हवन करने से शत्रुओं का उच्चाटन होता है ॥ ७ ॥

रोगनाशक—मधु, शहद तथा चीनी मिले हुए दूर्वा, गुरुच एवं धान के लावा से जो हवन करता है, वह समस्त रोगों को शान्त कर देता है । अथवा हवन के दर्शन मात्रसे ही रोगी के समस्त रोग अपने-आप नष्ट हो जाते हैं ॥ ८ ॥

समस्त कार्य-साधक—साधक को चाहिए कि, वह समस्त कार्य की सिद्धि के लिए पर्वत की चोटी पर, घनघोर जंगल में, नदी तट पर अथवा भगवान् शिव के मन्दिर में ब्रह्मचर्य पूर्वक बगलामुखी देवी के मन्त्र का एक लाख जप करे ॥ ९ ॥

शत्रु शक्तिनाशक—चीनी तथा मधु से युक्त एक वर्ण वाली गौ के दूध को बगलामुखी मन्त्रसे तीन सौ बार अभिमन्त्रित कर, उस दूध का पान करने से शत्रुओं का समस्त पराभव (सामर्थ्य) नष्ट होता है ॥ १० ॥

---

१. गरुतः =पक्षान् ।

श्वेत-पालाश-काष्ठेन रचिते रम्यपादुके ।
अलक्तरञ्जिते लक्षं मन्त्रयेन्मनुनाऽमुना ॥११॥
तदारूढः पुमान् गच्छेत् क्षणेन शतयोजनम् ।
पारदं च शिलां तालपिष्टं मधुसमन्वितम् ॥१२॥
मनुना मन्त्रयेल्लक्षं लिम्पेत्तेनाऽखिलां तनुम् ।
अदृश्यः स्यान्नृणामेष आश्चर्यं दृश्यतामिदम् ॥१३॥
षट्कोणे विलिखेद् बीजं साध्यनामान्वितं मनोः ।
हरितालं निशाचूर्णैरुन्मत्त-रससंयुतैः ॥१४॥
शेषाक्षरैः समावीतं धरागेहविराजितम् ।
तद् यन्त्रं स्थापितं प्राणपीतसूत्रेण वेष्टयेत् ॥१५॥

---

शीघ्र गतिकारक—सफेद पलाश की लकड़ी का सुन्दर खड़ाऊँ बनवाकर, उसे लाल रंगसे रंगकर, चौदह लाख बगला मन्त्र से अभिमन्त्रित कर, उस खड़ाऊँ को धारण करने से मनुष्य एक क्षण में सौ कोश चला जाता है।

अदृश्यकारक - पारा, शिलाजीत और ताड़पत्र के चूर्ण को मधु के साथ अपने शरीर के सभी अंगों में लगाकर चौदह लाख बगलामुखी मन्त्र के जप करने से मनुष्य अदृश्य हो जाता है अर्थात् मनुष्यों के समक्ष ही अत्यन्त आश्चर्यपूर्वक गायब हो जाता है ॥ ११-१३ ॥

शत्रु समस्त कार्यरोधक —धतूरे के रस एवं निशाचूर्ण से हरिताल को घोंटकर षट्कोण यन्त्र में बीज मन्त्र तथा अपने शत्रु-नाम के पूरे अक्षर को लिखकर, उस यन्त्र को पीले डोरे से लपेट कर अपने घर में रख दे ॥ १४–१५ ॥

भ्राम्यत्-कुलालचक्रस्थां गृहीत्वा मृत्तिकां तथा ।
रचयेद् वृषभं रम्यं यन्त्रं तन्मध्यतः क्षिपेत् ॥१६॥
हरितालेन संलिप्य वृषं प्रत्यहमर्चयेत् ।
स्तम्भयेद् विद्विषां वाचं गतिं कार्यं परम्पराम् ॥१७॥
आदाय वामहस्तेन प्रेतभूमिस्थ-खर्परम् ।
अङ्गारेण चितास्थेन तत्र यन्त्रं समालिखेत् ॥१८॥
मन्त्रितं निहितं भूमौ रिपूणां स्तम्भयेद् गतिम् ।
प्रेतवस्त्रे लिखेद् यन्त्रमङ्गारेणैव तत्पुनः ॥१९॥
मण्डूकवदने न्यस्य पीतवस्त्रेण वेष्टितम् ।
पूजितं पीतपुष्पैस्तद्वाचं संस्तम्भयेद् द्विषाम् ॥२०॥

---

घूमते हुए कुम्हार की चाक की मिट्टी को लेकर, उस मिट्टी से बैल की एक सुन्दर मूर्ति बनाकर, उस मूर्ति के मध्य में, उस यन्त्र को रखे और चौदह दिन तक उसमें हरताल का लेपन कर, उस बैल का चौदह दिन पूजन करने से शत्रु की वाणी, गति एवं उसके समस्त कार्य रुक जाते हैं ॥ १६-१७ ॥

शत्रुगतिस्तम्भन—बायें हाथ से श्मशान भूमि-स्थित मनुष्य की खोपड़ी लेकर चिता के अंगार से उस खोपड़ी में षट्कोण यन्त्र का निर्माण कर, बगलामुखी मन्त्र से अभिमन्त्रित कर, उसे पृथ्वी में गाड़ देने से शत्रु की गति का स्तम्भन होता है ।

शत्रु वाणी रोधक—मृतक के कफन पर चिता के अंगार से यन्त्र निर्माण कर, उसे मेंढक के मुख में रखकर, मेंढक सहित उस यन्त्र को पीले वस्त्र से लपेट कर, पीत पुष्प से पूजन करने से शत्रु की वाणी का स्तम्भन होता है ॥ १८-२० ॥

यद्भूमौ भविता दिव्यं तत्र यन्त्रं समालिखेत् ।
मार्जितं तद्वृषापत्रैर्दिव्यस्तम्भनकृद् भवेत् ॥२१॥
इन्द्र - वारुणिकामूलं सप्तशो मनुमन्त्रितम् ।
क्षिप्तं जले ह्रिव्यकृतं जलस्तम्भनकारकम् ॥२२॥
किं भूरिणा साधकेन मन्त्रः सम्यगुपासितः ।
शत्रूणां गतिबुद्ध्यादेः स्तम्भनो नाऽत्र संशयः ॥२३॥

इति बगलोपासनपद्धतौ मन्त्रमहार्णवस्थ-बगलामुखी-
मन्त्रप्रयोगः समाप्तः ।

●

---

अतिवृष्टि स्तम्भन—जहाँ पर अत्यन्त घनघोर वृष्टि (वर्षा) होती हो, उस स्थान पर षट्कोण यन्त्र लिखकर, उस यन्त्र की वृषा पत्र द्वारा मार्जन करने से अतिवृष्टि रुक जाती है ॥ २१ ॥

जलप्रवाह स्तम्भन—सात अथवा चौदह बार इन्द्र एवं वरुण मन्त्र से अभिमन्त्रित बगलामुखी यन्त्र को बाढ़ आये हुए जल में फेंक देने से तत्क्षण बढ़ती हुई बाढ़ रुक जाती है ॥ २२ ॥

अब हम साधक के लिए कहाँ तक अधिक मन्त्रों का वर्णन करें। जितना यहाँ निरूपण किया गया है उस प्रयोग को भली-भाँति करने से निःसन्देह शत्रु की गति, बुद्धि आदि का स्तम्भन होता है ॥ २३ ॥

इस प्रकार पण्डित शिवदत्तमिश्र शास्त्रिकृत 'शिवदत्ती' हिन्दी टीका
सहित बगलोपासनपद्धति में मन्त्रमहार्णव में वर्णित
बगलामुखी-मन्त्रप्रयोग समाप्त ।

●

## बगलोपासनविधिः

अथाऽतः सम्प्रवक्ष्यामि स्तम्भिनीं बगलामुखीम् ।
तारं मायां समुच्चार्य्य वदेच्च बगलामुखि ॥ १ ॥
तदग्रे सर्वदुष्टानां ततो वाचं मुखं पदम् ।
स्तम्भयेति पदं जिह्वां कीलयेति ततः परम् ॥ २ ॥
बुद्धि विनाशय ह्लीं ॐ स्वाहा [1]वेदाऽग्निवर्णकः ।
नारायणो मुनिस्त्रिष्टुप्छन्दश्च बगलामुखी ॥ ३ ॥
देवीबीजं तु हृल्लेखा स्वाहा शक्तिः समीरिता ।
विनियोगोऽस्य विख्यातः पुरुषार्थचतुष्टये ॥ ४ ॥

---

बगलोपासन की विधि—

अब मैं बगलामुखी मन्त्र का निरूपण करता हूँ, जो कि छत्तीस अक्षर वाला है। वह मन्त्र इस प्रकार है—

मन्त्र—'ॐ ह्लीं बगलामुखि ! सर्वदुष्टानां वाचं मुखं पदं स्तम्भय । जिह्वां कीलय बुद्धि विनाशय ह्लीं ॐ स्वाहा' ॥ १–२ ॥

विनियोग—इस मन्त्र के नारायण ऋषि, त्रिष्टुप् छन्द, देवी बीज, स्वाहा शक्ति बतायी गयी है। और धर्म, अर्थ, काम एवं मोक्ष के लिए इस मन्त्र का विनियोग करना चाहिए ॥ ३–४ ॥

---

१. 'षट्त्रिंशवर्णकः' इत्यपि पाठः ।

हृल्लेखा हृदयं प्रोक्तं शिरश्च [1]बगलामुखी ।
शिखा तु सर्वदुष्टानां ततो वाचं मुखं पदम् ।। ५ ।।
स्तम्भयेति च वर्मोक्तं जिह्वां कीलय नेत्रकम् ।
बुद्धिं विनाशयाऽस्त्रं स्यात् षडङ्गन्यास ईरितः ।। ६ ।।
मूर्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः श्रोत्रयोर्नसोः ।
गण्डद्वये तथा चोष्ठेऽधरास्य-चिबुकेषु च ।। ७ ।।
गले च दक्षदोर्मूले तन्मध्ये मणिबन्धके ।
अङ्गुलीनां तथा मूले हस्ताग्रे चैवमेव हि ।। ८ ।।
न्यसेद् वामभुजादौ च दक्षोरुमूलके ततः ।
दक्षजानुनि गुल्फे चाऽङ्गुलिमूले पदाग्रतः ।। ९ ।।

---

हृदयादि षडङ्गन्यास—१. ॐ ह्लीं हृदयाय नमः । २. ॐ बगलामुखि शिरसे स्वाहा । ३. ॐ सर्वदुष्टानां शिखायै वषट् । ४. ॐ वाचं मुखं पदं स्तम्भय कवचाय हुम् । ५. ॐ जिह्वां कीलय नेत्रत्रयाय वौषट् । ६. ॐ बुद्धिं विनाशय अस्त्राय फट् ।

इसी प्रकार मन्त्र के प्रत्येक पदों से क्रमशः मस्तक, भाल, दोनों भौंहों, दोनों नेत्र, कान, नाक, दोनों कपोल तथा होठ के दोनों भाग, मुख, दाढ़ी, गला, दाहिनी कोहनी, कलाई, अंगुलियाँ एवं उनके मूल भाग, हाथ का अग्रभाग, बायीं भुजा, दाहिना जंघा, घुटना, चरण की अंगुलियों के अग्रभाग में न्यास करे ।। ५-९ ।।

---

१. 'बगलामुखि' इति ।

गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासन-संस्थिताम् ॥१०॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्र-वृत्तपीन-पयोधराम् ॥११॥
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ॥१२॥
एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ।
भूप्रदेशे मनोरम्ये पुष्पामोदसुधूपिते ॥१३॥
गोमयेनाथ संलिप्ते मण्डले त्वासनं चरेत् ।
सौवर्णे वाऽथ रौप्ये वा पैत्तले वाऽपि भूर्जके ॥१४॥
कर्पूरा-ऽगरु-कस्तूरी-श्रीखण्ड-कुङ्कुमैरपि
लिखेद् यन्त्रं प्रयत्नेन लेखन्या हेमतारयोः ॥१५॥

---

ध्यान—गम्भीर, मदोन्मत्त, तपे हुए सुवर्ण के समान देदीप्यमान, चतुर्भुज, त्रिनेत्र, कमल के आसन पर विराजमान, दाहिनी ओर मुद्गर, बायीं ओर पाश, लपलपाती जीभ एवं वज्र धारण की हुई, पीत वस्त्रधारी, घने-चौड़े स्थूल स्तन वाली, सुवर्ण कुण्डल से सुशोभित कर्ण वाली, सुवर्ण के सिंहासन पर आसीन, शत्रुओं का स्तम्भन करने-वाली बगलामुखी देवी का ध्यान करे ॥ १०–१२ ॥

यन्त्रविधान—पुष्पों के सुगन्ध से सुवासित, सुन्दर स्थान में गोबर से लीपकर मण्डल का निर्माण करे। उसमें भगवती बगलामुखी का आसन स्थापित करे। तत्पश्चात् सोने, चाँदी अथवा पीतल के पत्तर एवं भोजपत्र में कपूर, अगर, कस्तूरी, श्रीखण्ड (चन्दन), कुमकुम से अनार की लेखनी द्वारा सावधानपूर्वक यन्त्र में सर्वप्रथम

मध्ये योनिं [1]समालिख्य तद् बाह्ये तु षडस्त्रकम् ।
तद् बाह्येऽष्टदलं पद्मं तद् बाह्ये षोडशच्छदम् ।
चतुरस्त्रत्रयं बाह्ये चतुर्द्वारोपशोभितम् ॥१६॥

यत्र नोक्तं देवतायाः पीठं वा पीठशक्तयः ।
तत्र मायोदितं पीठं ज्ञेयास्ता एव शक्तयः ॥१७॥

तद् बीजेन यजेत् पीठं यद्वा मायाणुनाऽथ वा ।
तत्राऽऽबाह्य यजेद् देवीं . सुपीतैरुपचारकैः ॥१८॥

यजेदङ्गानि षट्कोणे पूर्वद्वारादिषु क्रमात् ।
गणेशं बटुकं चाऽपि योगिनीः क्षेत्रपालकम् ॥१९॥

---

'ह्लीं' इस बीज मन्त्र को लिखकर मध्य में त्रिकोण लिखे। उसके बाहर षट्दल कमल का निर्माण कर, उसके भी अग्रिम भाग में अष्टदल कमल तथा उसके आगे सोलह दल वाला कमल का निर्माण कर, तीन चतुरस्र एवं उसके आगे चार द्वार का निर्माण करे ॥१३-१६॥ जिस स्थल पर देवता का पीठ अथवा उन पीठों की शक्तिओं का वर्णन नहीं किया गया है, उस स्थान पर मायापीठ और माया शक्तियों का ही निर्माण करना चाहिए ॥ १७ ॥ बीज अथवा अणु माया से उस पीठ का पूजन करे ॥ १८ ॥

उसके बाद षट्कोण में अंगों का पूजन कर, चारों दिशाओं के द्वार में क्रम से गणेश, बटुक, योगिनी, क्षेत्रपाल का पूजन करे ॥१९॥

१. 'समालेख्य' इति पाठः ।

ईशानादि-निर्ऋत्यन्तं गुरुपङ्‌क्ति समर्चयेत् ।
बगलां पूर्वपत्रे तु स्तम्भिनीं च ततः परम् ॥२०॥
जृम्भिनीं मोहिनीं चैव प्रगल्भामचलां जयाम् ।
दुर्धर्षा-कल्मषा-धीरा-कल्याण्याकालकर्षिणीः ।
भ्रामिकां मन्दगमनां भोग्याख्यां चैव योगिकाम् ॥२१॥
एताः षोडशपत्रेषु गन्ध-पुष्पा-ऽक्षतैर्यजेत् ।
षोडशस्वरसंयुक्ताः सम्प्रदायात् कुलागमे ॥२२॥
यजेत्तु पत्रमध्येषु कल्पिते चाऽष्टपत्रके ।
पूर्वाद् ब्राह्म्यादिका अष्टौ वाहनायुधसंयुताः ॥२३॥
लोकेशांश्च तदस्त्राणि पूजयेद् बाह्यतस्तथा ।
योनिमध्ये मूलदेवीं त्रिरञ्जलिभिरर्चयेत् ॥२४॥

---

ईशान से लेकर निर्ऋतिपर्यन्त गुरु-पंक्ति का पूजन करे। तदनन्तर कमल के षोडश पत्र में क्रम से बगला, स्तम्भिनी, जृम्भिनी, मोहिनी, प्रगल्भा, अचला, जया, दुर्धर्षा, कल्मषा, धीरा, कल्याणी, अकाल-कर्षिणी, भ्रामिका, मन्दगमना, भोग्या और योगिका को स्थापित कर, इन सभी का गन्ध, अक्षत, पुष्प आदि से भली-भाँति पूजन करे। साथ ही सम्प्रदाय एवं कुलाचार के अनुसार उन षोडश पत्रों में सोहल स्वरों का भी सन्निवेश करे॥ २०–२२॥ उसके मध्य में अष्टदल कमल पत्र में वाहन और आयुध से युक्त पूर्व दिशा से लेकर ब्राह्मी आदि शक्तियों का तथा उसके आगे अष्टदल पत्र में अस्त्रयुक्त आठ लोकपालों का पूजन करे। त्रिकोण के मध्य में पराम्बा जगदम्बा बगलादेवी का तीन अंजलि पीत पुष्प से पूजन करना चाहिए और

धूप-दीप-सुनैवेद्यै-र्गन्ध-ताम्बूल-दीपकैः ।
नीराज्यं विधिवत् पश्चाद्यथासङ्ख्यं निवेदयेत् ॥२५॥

पवित्रारोपणं कार्यं दमनेन तु पूजयेत् ।
देयं चापि सितान्नेन प्रत्यहं बलिपञ्चकम् ॥२६॥

हरिद्राग्रन्थिजा माला पीताम्बरधरः स्वयम् ।
पीतासनः स्मरेत् पीतं चायुतं जपमाचरेत् ॥२७॥

दशांशेन कृते होमे पीतद्रव्यैः प्रतर्पयेत् ।
सर्वपीतोपचारेण मन्त्रः सिद्धयति मन्त्रिणः ॥२८॥

साध्यसंज्ञां समुच्चार्य स्तम्भयेति ततः परम् ।
गतिस्तम्भकरी विद्या अरिस्तम्भनकारिणी ॥२९॥

मेधां प्रज्ञां च शास्त्रादीन् देव-दानव-पन्नगान् ।
स्तम्भयेच्च महाविद्या सत्यं सत्यं न संशयः ।

---

धूप, दीप, नैवेद्य, गन्ध, ताम्बूल तथा नीराजन (आरती) आदि षोडशोपचार से विधिवत् पूजन करे ॥२३-२५॥ और रेशमी धागे की पवित्रा समर्पित कर, प्रतिदिन श्वेत अन्न (चावल, खीर आदि) से पाँच बलि देवी को प्रदान करे ॥ २६ ॥

साधक को चाहिए कि, वह स्वयं पीला वस्त्र धारण कर, पीत आसन पर बैठकर, हल्दी के गाँठ की माला से, पीतवर्ण वाली बगला देवी का स्मरण कर, बगला मन्त्र का दस हजार जप करे ॥२७॥ जप का दशांश हवन और हवन का दशांश पीले द्रव्य से भगवती का मार्जन और तर्पण करे। इस प्रकार सभी पीत उपचार से पूजन, हवन, तर्पण एवं मार्जन से मन्त्र निश्चय ही सिद्ध होता है ॥२८॥ उस मन्त्र भाग में शत्रु का नाम उच्चारण कर 'स्तम्भय स्तम्भय' कहने से शत्रु का एवं उसकी गति का स्तम्भन होता है । इतना ही नहीं, अपितु उक्त मन्त्र द्वारा बुद्धि, मेधा, शास्त्र, देव, दानव, सर्प आदि का भी अवश्य

एकान्ते परमे रम्ये शुचौ देशेऽथ वा गृहे ॥३०॥
कुण्डं स-लक्षणं कृत्वा मेखलात्रयशोभितम् ।
योनिर्वितस्तिमात्रा तु षट्कर्माण्यत्र साधयेत् ।
तथाऽऽकर्षणकामस्तु लोणं त्रिमधुरान्वितम् ॥३१॥
निम्बपत्रं तैलयुक्तं विद्वेषणकरं परम् ।
हरितालं हरिद्रां च लवणेन च संयुताम् ।
स्तम्भने होमयेद् देवीं प्रज्ञायाश्च गतेर्मतेः ॥३२॥
आसुर्याश्चापि तैलेन महिषी रुधिरेण च ।
रिपूणां मारणार्थं तु श्मशानाऽग्नौ हुनेन्निशि ।
गृध्राणामपि काकानां गृहधूमयुतेन वै ॥३३॥
पक्षेण जुहुयाद् देवि ! शत्रोरुच्चाटनाय वै ।
पूर्वा – कुलालमृत्तावत्त्येरण्डश्चतुरङ्गुलः ॥३४॥

---

ही स्तम्भन होता है । इस मन्त्र का जप एकान्त, सुन्दर, पवित्र देश या घर में होना चाहिए ॥२९–३०॥ तीन मेखला से सुशोभित सुन्दर कुण्ड निर्माण कर, वित्ते भर की योनियुक्त कुण्ड का निर्माण कर, कुश-कण्डिका आदि द्वारा विधानपूर्वक मधु, घृत और शक्कर सहित नमक से हवन करने पर निश्चय ही आकर्षण होता है। यह प्रयोग अनुभूत (परीक्षित) है ॥ ३१ ॥ तेल मिश्रित नीम की पत्ती से हवन करने पर विद्वेषण (आपसी झगड़ा) होता है। हरताल, हरिद्रा, नमक में मिला कर आहुति देने से बुद्धि और गति का स्तम्भन होता है ॥३२॥ रात्रि में, चिता की अग्नि में सरसों का तेल एवं भैंस के रुधिर द्वारा हवन करने से शत्रु का मारण होता है। शत्रु के उच्चाटन के लिए गीध और कौवे के पंख से हवन करना चाहिए। समस्त रोगों की शान्ति के लिए कुम्हार की चाक की मिट्टी चार-चार

लाजास्त्रिमधुयुक्ताश्च सर्वरोगोपशान्तये ।
लक्षमेकं जपेद् देवि ! ब्रह्मचारी दृढव्रतः ॥३५॥
पर्वताग्रे महारण्ये सिद्धे शैवालये गृहे ।
सङ्गमे च महानद्योर्निशायामपि साधयेत् ॥३६॥
श्वेतब्रह्मतरोर्मूले पादुकाश्चैव कारयेत् ।
अलक्तस्य च रागेण रञ्जिता च हरिद्रया ॥३७॥
अनया विधया चापि लक्षैकेन च मन्त्रिताम् ।
शतयोजनमात्रं तु स गच्छेच्चिन्तिते पथि ॥३८॥
रसं मनःशिला तालं माक्षिकेण समन्वितम् ।
पिष्ट्वाऽभिमन्त्र्य लक्षैकं सर्वाङ्गे लेपने कृते ॥३९॥
अदृश्यकारकं तत् स्याल्लोके च महदद्भुतम् ।
सुरभेरेकवर्णाया क्षारोत्थं क्षीरमाहरेत् ॥४०॥

---

अंगुल रेंड़ का काष्ठ और त्रिमधु (मधु, घृत, शक्कर) युक्त लाजा का हवन करे । साधक को चाहिए कि, वह दृढव्रती और ब्रह्मचर्यपूर्वक पर्वत, शिखर, घनघोर जंगल, सिद्ध स्थान, शिव मन्दिर, गृह और महानदियों के संगम में एक लाख जप रात्रि में करने से मन्त्र सिद्ध होता है ।। ३३–३६ ।।

श्वेत ब्रह्मतरु (मन्दार या पलास) के मूल में पादुका (खड़ाऊँ) का निर्माण कर, उसको आलता एवं हल्दी से रंग कर एक लाख बगलामुखी मन्त्र के जाप करने से सौ योजन मार्ग अति शीघ्र-अनायास चला जाता है ।। ३७-३८ ।। धतूरे का रस, मैनसिल और ताड़पत्र में शहद मिलाकर उसे पीस कर सर्वांग में लेपन कर एक लाख जप करने से वह व्यक्ति अदृश्य(गायब)हो जाता है और लोक में वह महान् अद्भुत

शर्करा-मधु-संयुक्तं त्रिशतैर्मन्त्रितं प्रिये ! ।
पाययित्वा तु हरते विषं स्थावर-जङ्गमम् ॥४१॥
दारिद्र्यमोचनं चैव लक्षमेकं जपेत्ततः ।
दशांशेन कृते होमे एभिर्द्रव्यैः पृथक् पृथक् ॥४२॥

इति पण्डित-श्रीशिवदत्तमिश्रशास्त्रिकृत-बगलोपासनपद्धतौ
मेरुतन्त्रोक्त-बगलोपासनविधिः समाप्तः ।

●

---

चमत्कार दिखाता है। एक वर्ण वाली गौ के धारोष्ण दूध, शर्करा एवं मधु मिलाकर विष वाले मनुष्य को पिलाकर बगलामुखी मन्त्र के तीन सौ जप मात्र से ही चराचर प्राणियों का विष अति शीघ्र नष्ट हो जाता है॥ ३९-४१ ॥ एक लाख जप एवं शाकल से दशांश हवन करने पर निश्चय ही दरिद्रता नष्ट हो जाती है॥ ४२ ॥

इस प्रकार पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत 'शिवदत्ती' हिन्दी
टीका सहित बगलोपासनपद्धति में मेरुतन्त्रोक्त
बगलोपासनविधि समाप्त ।

●

# बगलामुखी-दीपदान-विधिः

अथाऽतः सम्प्रवक्ष्यामि बगलादीपमुत्तमम् ।
कृतेन येन विघ्नौघो विलयं याति मन्त्रिणः ॥ १ ॥
शुद्धानि खलु बीजानि पक्षतुर्मुद्गरेण वा ।
एकीकृत्य विधातव्यो दीपः सुस्निग्धशोभनः ॥ २ ॥
षट्त्रिंशत्तन्तुभिः कार्या दृढा वर्तिः सुरञ्जिता ।
गव्यामाज्यं च कौसुम्भं तैलं वा दीपकर्मणि ॥ ३ ॥
एतान्यानीय पूर्वं तु ततो दीपं प्रदापयेत् ।
हरिद्रया रक्तवस्त्रं परिधाय शुचिः क्षमी ॥ ४ ॥
पीतासनोपविष्टश्च पीतमाल्यानुलेपनः ।
उत्तरासम्मुखो भूत्वा हरिद्रालिप्तभूतले ॥ ५ ॥

---

बगलामुखी दीपदान प्रकार—

साधक के समस्त विघ्नराशि नष्ट करने वाली उत्तम बगलामुखी के दीपदानविधि का निरूपण करता हूँ ॥ १ ॥ शुभ मुहूर्त में, शुद्ध मुद्गर के बीज को इकट्ठा कर चिकना और सुन्दर दीप निर्माण कर, छत्तीस तन्तु की बत्ती बनाकर, गो घृत, (कुसुमपुष्प या केसर), तेल ये सब सामग्री पहले इकट्ठा कर तत्पश्चात् भगवती को दीप प्रदान करे। साधक को चाहिए कि, वह क्षमाशील और पवित्र होकर हरिद्रा से रंगे हुए वस्त्र धारण कर, पीले आसन पर बैठ, पीली माला एवं पीत चन्दन लगा, उत्तराभिमुख हो, हल्दी से लिपी हुई पृथ्वी पर, त्रिकोण बनाकर, यत्नपर्वक दीप स्थापित

त्रिकोणं कारयित्वा तु दीपं संस्थाप्य यत्नतः ।
घृतमापूर्य वर्तिं च दीपं प्रज्वालयेत् सुधीः ॥ ६ ॥
मूलमन्त्रं समुच्चार्य चेति दीपं ततो वदेत् ।
सङ्कल्प-न्यासपूर्वं तु जपेदष्टोत्तरं शतम् ॥ ७ ॥
एवं रात्रोपकुर्वाणो मासेनैकेन साधकः ।
असाध्यान् साधयेत् कामान् वशयेदात्मनो रिपून् ।
क्षोभयेत् स्तम्भयेच्चापि द्वेषयेत् प्रक्षिपेदिति ॥ ८ ॥

इति बगलोपासनपद्धतौ बगलामुखीदीपदानविधिः समाप्तः ।



---

कर, उसमें घी भरकर दीप की बत्ती को प्रज्वलित करे ॥ २–६ ॥ मूल मन्त्र का उच्चारण करता हुआ मूल मन्त्र से ही न्यासपूर्वक दीप का संकल्प कर, एक सौ आठ बार बगलामुखी मन्त्र का जप रात्रि में एक मास पर्यन्त करने से असाध्य कार्य की सिद्धि, मनोभिलषित फलकी प्राप्ति और शत्रुओं को अपने वश में करना (अधीन करना), स्तम्भन, विद्वेषण तथा शत्रुनाश आदि कार्य तत्क्षण सिद्ध होते हैं ॥ ७-८ ॥

इस प्रकार पण्डित श्रीशिवदत्तमिश्र शास्त्रिकृत 'शिवदत्ती' हिन्दी टीका सहित बगलोपासन-पद्धति में मेरुतन्त्रोक्त बगलामुखी-दीप-दानविधि समाप्त ।



# बगलोत्पत्तिकारणम्

अथ वक्ष्यामि देवेशि ! बगलोत्पत्तिकारणम् ।
पुरा कृतयुगे देवि ! वात-क्षोभ उपस्थिते ।। १ ।।
चराऽचर-विनाशाय विष्णुश्चिन्तापरायणः ।
तपस्यया च सन्तुष्टा [1]महाश्रीस्त्रिपुराम्बिका ।। २ ।।
हरिद्राख्यं सरो दृष्ट्वा जलक्रीडापरायणा ।
महापीतह्रदस्याऽन्ते सौराष्ट्रे बगलाम्बिका ।। ३ ।।
श्रीविद्यासम्भवं तेजो विजृम्भति इतस्ततः ।
चतुर्दशी भौमयुता मकारेण समन्विता ।। ४ ।।

---

बगलामुखी देवी की उत्पत्ति —

हे देवेशि ! बगलामुखी की उत्पत्ति का वर्णन मैं करता हूँ। हे देवि ! एक समय सत्ययुग में भयंकर तूफान आने पर समस्त चराचर नष्ट होने लगा। उस समय शेषशायी भगवान् विष्णु अत्यन्त चिन्तित हुए तथा उग्र तपस्या करने लगे। उस तपस्या से महात्रिपुर सुन्दरी अत्यन्त सन्तुष्ट हुईं ।। १-२ ।। हरिद्रा नाम के सरोवर को देखकर सौराष्ट्र (काठियावाड़) में बगलादेवी अत्यन्त पीले एवं गहरे उस सरोवर में जलक्रीड़ा करने के लिए जिस समय प्रवृत्त हुईं उस समय श्रीविद्या से उत्पन्न अपूर्व तेज चारों ओर फैल गया। उस रात्रि का नाम वीर-रात्रि पड़ा। उस समय आकाश ताराओं से अत्यन्त सुशोभित था। उस दिन चतुर्दशी और मंगलवार था एवं पंच मकार से सेवित देवी

---

१. 'महात्रिपुरसुन्दरी' इत्यपि पाठः ।

कुल-ऋक्ष-समायुक्ता वीररात्रिः प्रकीर्तिता ।
तस्यामेवाऽर्द्धरात्रौ वा पीतह्लदनिवासिना ॥५॥
ब्रह्मास्त्रविद्या सञ्जाता त्रैलोक्यस्तम्भिनी परा ।
तत्तेजो विष्णुजं तेजो विद्याऽनुविद्ययोर्गतम् ॥६॥

इति बगलोपासनपद्धतौ स्वतन्त्र-तन्त्रोक्त-
बगलोत्पत्तिकारणं सम्पूर्णम् ।

●

---

उसी दिन अर्धरात्रि में उस गहरे पीले ह्लद में निवास किया। अर्थात् तभी से चतुर्दशी मंगलवार के दिन तान्त्रिकगण पंच मकार का सेवन करते हैं ॥ ३–५ ॥ श्री विद्याजनित तेज से दूसरी त्रैलोक्य-स्तम्भिनी ब्रह्मास्त्र विद्या उत्पन्न हुई। उस ब्रह्मास्त्र विद्या का तेज विष्णु से उत्पन्न तेज में विलीन हुआ और वह तेज विद्या और अनुविद्या में लीन हुआ ॥ ६ ॥

इस प्रकार आचार्य पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत 'शिवदत्ती'
हिन्दीटीकायुत बगलोपासनपद्धति में स्वतन्त्रतन्त्रोक्त
बगलोत्पत्तिकारण समाप्त ।

●

# बगला-नित्यार्चन-पद्धतिः

आसनशुद्धिं कृत्वा, तत्रोपविश्य, आचमन-मन्त्रेणाऽऽचम्य प्राणानायम्य च। वामे—गुरुभ्यो नमः। परम-गुरुभ्यो नमः। परमेष्ठिगुरुभ्यो नमः। दक्षे—गणेशाय नमः। दिव्यदृष्टया दिव्यान् विघ्नानुत्सार्य, वामपार्ष्णिघातेन भौमान् विघ्नानुत्सार्य,

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥

'अद्येत्यादि०' बगलामुखी-प्रीत्यर्थं यथासङ्ख्याकं जपं करिष्ये। तदङ्गत्वेन भूतशुद्ध्यादिपूर्वकं यन्त्रपूजनं च करिष्ये।

तत्रादौ भूतशुद्धि—प्राणप्रतिष्ठा—सृष्टि-स्थिति-संहार-मातृकान्यासान् कुर्यात्। ततः सृष्टि—स्थिति—मातृकान्यास-कला - मातृकान्यास—प्रपञ्चमातृकान्यास - बगलामातृकान्यास-लघुषोढान्यासांश्च कृत्वा, मूलमन्त्रस्य ऋष्यादिन्यासं कुर्यात्। आदौ विनियोगः—

ॐ अस्य श्रीबगलामुखीमहाविद्यामन्त्रस्य नारदऋषिः, त्रिष्टुप्छन्दः, बगलामुखीमहाविद्यादेवता, ह्लीं बीजम्, स्वाहा शक्तिः, ॐ कीलकं ममाऽभीष्टसिद्ध्यर्थे जपे विनियोगः।

ततः करन्यासः

नारदऋषये नमः शिरसि। त्रिष्टुप्छन्दसे नमः मुखे। बगलामुखीमहाविद्यादेवतायै नमः हृदि। ह्लीं बीजाय नमः गुह्ये। स्वाहाशक्तये नमः पादयोः। ॐ कीलकाय नमः नाभौ। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः। बगलामुखी तर्जनीभ्यां नमः। सर्वदुष्टानां मध्यमाभ्यां नमः। वाचं मुखं पदं स्तम्भय अनामिकाभ्यां नमः। जिह्वां कीलय कनिष्ठिकाभ्यां नमः। बुद्धिं विनाशय ह्लीं ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

पदन्यासः

ॐ नमः ब्रह्मरन्ध्रे। ह्लीं नमः शिरसि। बगलामुखी नमः ललाटे। सर्वदुष्टानां नमः मुखे। वाचं नमः हृदये। मुखं नमः उदरे। पदं नमः नाभौ। स्तम्भय नमः पृष्ठयोः। जिह्वां नमः गुह्ये। कीलय नमः मूलाधारे। बुद्धिं नमः ऊर्वोः। विनाशय नमः जान्वोः। ह्लीं नमः गुल्फयोः। ॐ नमः अङ्गुलिमूले। स्वाहा नमः अङ्गुल्यग्रे। एवमवरोहन्यासं कुर्यात्।

यथा—ॐ नमः पादाङ्गुल्योः। ह्लीं नमः पादाङ्गुलि-मूलयोः। बगलामुखी नमः गुल्फयोः। सर्वदुष्टानां नमः जान्वोः। वाचं नमः ऊर्वोः। मुखं नमः मूलाधारे। पदं नमः गुह्ये। स्तम्भय नमः पृष्ठयोः। जिह्वां नमः नाभौ। कीलय नमः उदरे। बुद्धिं नमः हृदये। ह्लीं नमः ललाटे। ॐ नमः शिरसि। स्वाहा नमः ब्रह्मरन्ध्रे।

—

अक्षरन्यासः

ॐ नमः शिरसि। ह्लीं नमः ललाटे। वं नमः भ्रुकुटयाम्। गं नमः दक्षनेत्रे। लां नमः वामनेत्रे। मुं नमः दक्षकर्णे। खीं नमः वामकर्णे। सं नमः दक्षनसि। वँ नमः वामनसि। दुं नमः दक्षकपोले। ष्टां नमः वामकपोले। नां नमः ऊर्ध्वोष्ठे। वां नमः अधरोष्ठे। चं नमः मुखे। मुं नमः चिबुके। खं नमः कण्ठे। पं नमः दक्षभुजमूले। दं नमः दक्षकूर्परे। स्तं नमः दक्षिणमणिबन्धे। भं नमः दक्षाङ्गुलिमूले। यं नमः दक्षाङ्गुल्यग्रे। जिं नमः वामभुजमूले। ह्वां नमः वामकूर्परे। कीं नमः वाममणिबन्धे। लं नमः वामाङ्गुलिमूले। यं नमः वामाङ्गुल्यग्रे। बुं नमः दक्षजङ्घे। द्धिं नमः दक्षजानुनि। विं नमः दक्षगुल्फे। नां नमः दक्षाङ्गुलिमूले। शं नमः दक्षाङ्गुल्यग्रे। यं नमः वामजङ्घे। ह्लीं नमः वामजानुनि। ॐ नमः वामगुल्फे। स्वां नमः वामपादाङ्गुलिमूले। हां नमः वामपादाङ्गुल्यग्रे। इत्यक्षरन्यासः।

तत्त्वन्यासः

ॐ आत्मतत्त्वव्यापिनीं बगलामुखीश्रीपादुकां पूजयामि नमः, मूलाधारे। ॐ विद्यातत्त्वव्यापिनीं बगलामुखीश्रीपादुकां पूजयामि नमः, अनाहते (हृदये)। ॐ शिवतत्त्वव्यापिनीं बगलामुखीश्रीपादुकां पूजयामि नमः, सर्वाङ्गे। इति तत्त्वन्यासः।

हस्तं बद्ध्वा, पञ्जरन्यासं कुर्यात् ।

यथा—

बगला पूर्वतो रक्षेदाग्नेय्यां च गदाधरी ।
पीताम्बरा दक्षिणे च नैर्ऋत्ये स्तम्भिनी तथा ॥ १ ॥
जिह्वां कीलिन्यथो रक्षेत् पश्चिमे सर्वदा मम ।
वायव्ये च सुधोन्मत्ता कौवेर्य्यां च त्रिशूलिनी ॥ २ ॥
ब्रह्मास्त्रदेवता पातु ऐशान्ये सततं मम ।
रक्षेन्मां सततं चैव पाताले बगलामुखी ॥ ३ ॥
ऊर्ध्वं रक्षेन्महादेवी जिह्वास्तम्भनकारिणी ।
एवं दश दिशो रक्षेत् बगला सर्वसिद्धिदा ॥ ४ ॥

केचित् पञ्जरन्यासं षडङ्गान्ते कुर्वन्ति ।

मूलेनाऽऽचम्य, प्राणायामं कृत्वा, पीठन्यासं कुर्यात् । यथा—मं मण्डूकाय नमः मूलाधारे । ॐ कं कालाग्निरुद्राय नमः स्वाधिष्ठाने । ॐ आं आधारशक्त्यै नमः हृदये । ॐ प्रं प्रकृत्यै नमः नाभौ । ॐ कूं कुमार्यै नमः हृदये । ॐ वं वाराहाय नमः । ॐ अं अनन्ताय नमः । ॐ पृं पृथिव्यै नमः । ॐ अं अमृतसागराय नमः । तन्मध्ये—ॐ रं रत्नद्वीपाय नमः । ॐ चिं चिन्तामणिमण्डलाय नमः । ॐ कं कल्पवृक्षाय नमः । ॐ रं रत्नसिंहासनाय नमः । इति हृदि विन्यस्य । ॐ धं धर्माय नमः दक्षांसे । ॐ ज्ञां ज्ञानाय नमः वामांसे । ॐ वैं वैराग्याय नमः वामोरौ । ॐ ऐं ऐश्वर्याय नमः दक्षोरौ । ॐ अं अधर्माय नमः मुखे । ॐ अं अज्ञानाय नमः वामपार्श्वे ।

ॐ अं अवैराग्याय नमः नाभौ । ॐ अं अनैश्वर्याय नमः दक्षपार्श्वे । पुनः हृदि—ॐ आं आनन्दकन्दाय नमः । ॐ सं संविन्नालाय नमः । ॐ विं विश्वमयपद्माय नमः । ॐ विं विकारमयकेसरेभ्यो नमः । ॐ प्रं प्रकृत्यात्मकपत्रेभ्यो नमः । ॐ पं पञ्चाशद्वर्णाढ्यकर्णिकायै नमः । ॐ आं द्वादशकलात्मने सूर्यमण्डलाय नमः । ॐ षं षोडशकलात्मने सोममण्डलाय नमः । ॐ मं दशकलात्मने वह्निमण्डलाय नमः । ॐ सं सत्त्वाय नमः । ॐ रं रजसे नमः । ॐ तं तमसे नमः । ॐ अं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ॐ ह्रीं ज्ञानात्मने नमः । इति सर्वं हृदि विन्यस्य, पीठशक्तिर्विन्यसेत् ।

यथा—ॐ जयायै नमः । ॐ विजयायै नमः । ॐ अजितायै नमः । ॐ अपराजितायै नमः । ॐ नित्यायै नमः । ॐ विलासिन्यै नमः । ॐ दोग्ध्र्यै नमः । ॐ अघोरायै नमः । मध्ये—ॐ मङ्गलायै नमः । तदुपरि—ॐ ह्रीं सर्वशक्तिकमलासनाय श्रीपीताम्बरायाः योगपीठात्मने नमः । इति विन्यस्य, मानसपूजां कुर्यात् ।

यथा—करकच्छपमुद्रया पुष्पं गृहीत्वा,

गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ।।१।।
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्र-वृत्त-पीन-पयोधराम् ।।२।।

हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ।।
एवं ध्यात्वा च देवेशि ! शत्रुस्तम्भनकारिणीम् ।।३।।

जिह्वाग्रमादाय करेण देवीं
वामेन शत्रुं परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन
पीताम्बराढ्यां द्विभुजां नमामि ।।४।।

तत्पुष्पं शिरसि धृत्वा । ॐ लं पृथिव्यात्मकं श्रीपीताम्बरायै गन्धं परिकल्पयामि । ॐ हं आकाशात्मकं श्रीपीताम्बरायै पुष्पाणि परिकल्पयामि । ॐ यं वायव्यात्मकं श्रीपीताम्बरायै धूपं परिकल्पयामि । ॐ रं वह्न्यात्मकं श्रीपीताम्बरायै दीपं परिकल्पयामि । ॐ वं अमृतात्मकं श्रीपीताम्बरायै नैवेद्यं परिकल्पयामि । ॐ सं सर्वात्मकं श्रीपीताम्बरायै सर्वोपचारान् परिकल्पयामि । इति सम्पूज्य, यथाशक्ति-मूलमन्त्रं प्रजप्य,

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि ! त्वत्प्रसादान्महेश्वरि ! ।।

इति मन्त्रेण समर्प्य ।

ॐ स्वागतं देवदेवेशि ! सन्निधौ भव स्तम्भिनी ।
गृहाण मानसीपूजां यथावत्परिभाविताम् ।।

इति सम्प्रार्थ्य, पात्रस्थापनं कुर्यात् ।

यथा—स्ववामे बिन्दुत्रिकोण-षट्कोण-वृत्तचतुष्टयात्मकं मण्डलं कृत्वा, 'ॐ आधारशक्तये नमः' इति सम्पूज्य, ॐ मं

वह्निमण्डलाय दशकलात्मने श्रीपीताम्बरायाः सामान्यार्घ्यपात्रासनाय नमः। इति गन्धाऽक्षतैः सम्पूज्य, तत्र प्रादक्षिण्येन वह्निकलाः पूजयेत्।

यथा—ॐ धूम्रार्चिषे नमः। ॐ ऊष्मायै नमः। ॐ ज्वलिन्यै नमः। ॐ ज्वालिन्यै नमः। ॐ विस्फुलिन्यै नमः। ॐ सुश्रियै नमः। ॐ सुरूपायै नमः। ॐ कपिलायै नमः। ॐ हव्यवाहायै नमः। ॐ कव्यवाहायै नमः।

ततः आधारोपरि, 'अस्त्राय फट्' इति क्षालितं पात्रं संस्थाप्य, ॐ अं सूर्यमण्डलाय द्वादशकलात्मने श्रीपीताम्बरार्घ्यपात्राय नमः। इति प्रतिष्ठाप्य, सूर्यमण्डलत्वेन विभाव्य, द्वादशकलाः पूजयेत्।

यथा—१. ॐ तपिन्यै नमः। २. ॐ तापिन्यै नमः। ३. ॐ धूम्रायै नमः। ४. ॐ मारिच्यै नमः। ५. ॐ ज्वालिन्यै नमः। ६. ॐ रुच्यै नमः। ७. ॐ सुषुम्णायै नमः। ८. ॐ भोगदायै नमः। ९. ॐ विश्वायै नमः। १०. ॐ बोधिन्यै नमः। ११. ॐ धारिण्यै नमः। १२. ॐ क्षमायै नमः।

ततः मूलं विलोममातृकां पठन्। ( क्षं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं ) जलेनापूर्य, तत्र 'ॐ सोममण्डलाय

नमः' इति सम्पूज्य, सोममण्डलत्वेन विभाव्य, तत्र षोडश-कलाः पूजयेत् ।

यथा—१. ॐ अमृतायै नमः । २. ॐ मानदायै नमः । ३. ॐ पूषायै नमः । ४. ॐ तुष्टयै नमः । ५. ॐ पुष्टयै नमः । ६. ॐ रत्यै नमः । ७. ॐ धृत्यै नमः । ८. ॐ शशिन्यै नमः । ९. ॐ चन्द्रिकायै नमः । १०. ॐ कान्त्यै नमः । ११. ॐ ज्योत्स्नायै नमः । १२. ॐ श्रियै नमः । १३. ॐ प्रीत्यै नमः । १४. ॐ अङ्गदायै नमः । १५. ॐ पूर्णायै नमः । १६. ॐ पूर्णामृतायै नमः ।
इति सम्पूज्य ।

तत अग्नीशासुरवायव्य-अग्रे दिक्षु च षडङ्गं पूजयेत् ।

यथा—ॐ ह्लीं हृदयाय नमः, हृदयशक्त्यम्बां श्रीपादुकां पूजयामि । बगलामुखी शिरसे स्वाहा । शिरःशक्त्यम्बां श्रीपादुकां पूजयामि । सर्वदुष्टानां शिखायै वषट् । शिखा-शक्त्यम्बां श्रीपादुकां पूजयामि । वाचं मुखं पदं स्तम्भय कवचाय हुम् । कवचशक्त्यम्बां श्रीपादुकां पूजयामि । जिह्वां कीलय नेत्रत्रयाय वौषट् । नेत्रशक्त्यम्बां श्रीपादुकां पूजयामि । बुद्धिं विनाशय ह्लीं ॐ स्वाहा अस्त्राय फट् । अस्त्रशक्त्यम्बां श्रीपादुकां पूजयामि । इति षडङ्गदेवतां सम्पूज्य ।

'अस्त्राय फट्' इति मन्त्रेण छोटिकादिभिः परितः संरक्ष्य, 'हुँ' इति अवगुण्ठच, 'वं' इति धेनुमुद्रया अमृतीकृत्य,

योनिमुद्रां प्रदर्श्य, मत्स्यमुद्रया आच्छाद्य, मूलेन सप्तधा अभिमन्त्र्य, तत्सलिलबिन्दुभिः आत्मानं पूजासामग्रीं च सम्प्रोक्षयेत् । इति सामान्यार्घ्यविधिः ।

सामान्यार्घ्यस्योत्तरतस्तज्जलेन बिन्दुत्रिकोण-षट्कोण-वृत्तचतुरस्रात्मकं मण्डलं विधाय, बिन्दुमध्ये 'ईं' इति स्वरं विलिख्य, पुष्पा-ऽक्षतैः, 'ॐ आं आधारशक्तये नमः' इति सम्पूज्य, चतुरस्रस्याऽग्नीशासुर-वायव्यकोणेषु अग्रे दिक्षु च क्रमेण पूर्ववत् षडङ्गं सम्पूज्य, शङ्खमुद्रयाऽवष्टभ्य, 'ॐ अस्त्राय फट्' इति मन्त्रेण प्रक्षालितं शङ्ख-आधारपात्रं मण्डलोपरि संस्थाप्य, ॐ मं वह्निमण्डलाय धर्मप्रददशकलात्मने नमः, श्रीबगलायाः विशेषाधाराय नमः । प्रादक्षिण्येन परितः 'यं धूमार्चिषे नमः' इत्यादि सम्पूज्य, तत्र 'फट्' इति प्रक्षालितं सुधूपितं शङ्खं संस्थाप्य, 'ॐ सूर्यमण्डलाय वसुप्रदद्वादशकलात्मने श्रीबगला-मुखि विशेषार्घ्यपात्राय नमः' इति सम्पूज्य, प्रादक्षिण्येन परितः (कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं) 'ॐ तपिन्यै नमः' इति द्वादशकलाः पूजयेत् ।

मूलमन्त्रविलोममातृकाभ्यां जलेनापूर्य, तत्र 'ॐ सोममण्डलाय कामप्रदषोडशकलात्मने विशेषार्घ्यपात्रामृताय नमः' इति सम्पूज्य, तत्रामृतादि-चन्द्रस्य षोडशकलाः पूर्ववत् पूजयेत् ।

'फट्' इति मन्त्रेण मत्स्यमुद्रया संरक्ष्य, 'हुँ' इत्यवगुण्ठन-मुद्रयाऽवगुण्ठ्य, 'वं' इति धेनुमुद्रयाऽमृतीकृत्य, मत्स्यमुद्रया-ऽऽच्छाद्य, मूलमष्टधा प्रजप्य, योनिमुद्रां प्रदर्श्य, गन्धादिना सम्पूज्य, 'गङ्गे च०' इति मन्त्रेणाऽङ्कुशमुद्रया तीर्थानावाह्य, पुनः धेनु-योनिमुद्रां प्रदर्श्य, मूलमष्टधा प्रजपेत् । इति विशेषार्घ्यः ।

एवं विशेषार्घ्यस्योत्तरतः पाद्यादीनि पात्राणि स्थापयेत् । अथवा पाद्यादीनि सामान्यार्घ्येण विधेयानि ।

अन्तर्यागः

पीताम्बरे महेशानि श्रीमृत्युञ्जयवल्लभे ।
दयानिधे ! स्वपूजार्थमनुज्ञां दातुमर्हसि ॥

मण्डूककालाग्निरुद्रकूर्मान् आधारस्वाधिष्ठान् नाभिदेशेषु सम्पूज्य, आधारशक्त्यादीन् हृदि सम्पूज्य, पश्चात् धर्मादीनष्टौ यथास्थानं सम्पूज्य । पुनर्हृदि—शेषादि-परत्वान्ताः पीठदेवताः पूजयेत् ।

एवं पीठमन्वन्तं पुष्पाद्यैः सम्पूज्य, तस्मिंश्च परदेवतां सम्पूज्य । ततः उत्तमाङ्गे, हृदि, आधारे, पादे, सर्वाङ्गे पञ्चशः मूलेन मन्त्रपुष्पाञ्जलिं समर्पयेत् ।

ततः गुरूपदिष्टविधिना कुण्डलिनीमुत्थाप्य, द्वादशान्तं नीत्वा, तत्रत्यशिवेन समागमय्य, तदुत्थामृतधारया बगलां प्रीणयेत् ।

तत अष्टोत्तरशतं जपं कृत्वा, 'गुह्यातिगुह्य०' इति मन्त्रेण समर्पयेत् । इत्यन्तर्यागः ।

बहिर्यागः

त्रिकोण-षट्कोण-अष्टदल-षोडशदल-भूपुरात्मकं मन्त्रं काश्मीर-कुर्पूरा-ऽगुरु-कस्तूरी-श्रीखण्ड-कुङ्कुमैः हेमलेखिन्या निर्माय, तत्र मण्डूकादिपीठदेवान् यजेत् ।

यथा—ॐ मं मण्डूकाय नमः । ॐ कं कालाग्निरुद्रेभ्यो नमः । ॐ कूर्माय नमः । ॐ आधारशक्तये नमः । ॐ प्रकृत्यै नमः । ॐ कमठाय नमः । ॐ शेषाय नमः । ॐ क्षमायै नमः । ॐ क्षीरसागराय नमः । ॐ श्वेतद्वीपाय नमः । ॐ महामण्डपाय नमः । ॐ कल्पवृक्षाय नमः । ॐ धर्माय नमः । ॐ ज्ञानाय नमः । ॐ वैराग्याय नमः । ॐ अनैश्वर्याय नमः । ॐ अनन्ताय नमः । ॐ सूर्यमण्डलाय नमः । ॐ सोममण्डलाय नमः । ॐ पावकमण्डलाय नमः । ॐ सत्त्वाय नमः । ॐ रजसे नमः । ॐ अं आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ह्रीं ज्ञानात्मने नमः । ॐ मां मायातत्त्वाय नमः । ॐ कं कलातत्त्वाय नमः । ॐ विं विद्यातत्त्वाय नमः । ॐ पं परमतत्त्वाय नमः । एषु पीठमन्त्रेषु सर्वत्र आद्यक्षारं बीजं सबिन्दुकं ज्ञेयम् । पुष्पाद्यैः सम्पूज्य, पीठशक्तीः पूजयेत् ।

यथा—ॐ जयायै नमः । ॐ विजयायै नमः । ॐ अजितायै

नमः। ॐ अपराजितायै नमः। ॐ नित्यायै नमः। ॐ विलासिन्यै नमः। ॐ दोग्ध्र्यै नमः। ॐ अघोरायै नमः। (मध्ये) ॐ मङ्गलायै नमः। तदुपरि—ॐ ह्लीं सर्वशक्ति-कमलासनाय श्रीपीताम्बरायाः योगपीठात्मने नमः। इति मन्त्रेण देव्याः पीठं दत्वा, मूलेन मूर्ति सङ्कल्प्य, आवाहयेत्।

यथा—करकच्छपमुद्रया पुष्पं गृहीत्वा, हृत्समीपमानीय, मूलाधारात् कुण्डलिनीमुत्थाप्य, सुषुम्णामार्गेण ब्रह्मरन्ध्रं नीत्वा, तत्रस्थामृतभूतां विभाव्य, पुनस्तेनैव मार्गेण हृत्कमल-मानीय मूलं जपन्, पीताम्बराकुण्डलिन्योरभेदं विभाव्य, पूर्ववद् ध्यात्वा, मानसोपचारैः सम्पूज्य, 'यं' बीजं जपन्, वामनासया तेजोरूपं वायुं करस्थपुष्पाञ्जलौ संयोज्य, ततो मन्त्रं पठेत्—

देवेशि ! भक्तिसुलभे ! परिवारसमन्विते !।
यावत् त्वां पूजयिष्यामि तावद्देवि ! इहावह ॥

इति पठित्वा, क्लृप्तमूर्तौ पुष्पाञ्जलिं क्षिपेत्।

ततः आवाहनमुद्रया, श्रीपीताम्बरे देवि ! इहावह, इहावह, आवाहितो भव नमः। अथवा मूलमन्त्रान्ते—

आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वरि !।
अरण्यानिव हव्यांशं मूर्तावावाहयाम्यहम् ॥

आवाहितो भव नमः। मूलमन्त्रान्ते संस्थापनमुद्रया,

तवेयं महिमामूर्तिस्तथा त्वां सर्वगं शिवे !।
भक्ति-स्नेह-समाकृष्टं दीपवत् स्थापयाम्यहम् ॥

संस्थापितो भव नमः ।

सर्वान्तर्यामिणे देवि ! सर्वबीजमयं शुभम् ।
स्वात्मस्थानपरं शुद्धमासनं कल्पयाम्यहम् ॥

ततो मूलान्ते आसनं गृहाण नमः ।

अस्मिन् वरासने देवि ! सुखासीने क्षरात्मके ! ।
प्रतिष्ठितो भवेशे त्वं प्रसीद परमेश्वरि ! ॥

उपविष्टो भव नमः । मूलान्ते सन्निधापनमुद्रया,

अनन्या तव देवेशि मूर्तिशक्तिरियं शिवे ! ।
सान्निध्यं कुरु तस्यां त्वं भक्त्यानुग्रहतत्परे ॥

सन्निधापितो भव नमः, सन्निरोधनमुद्रया,

आज्ञया तव देवेशि कृपाम्भोधे गुणाम्बुधे ।
आत्मानन्दैकतृप्तस्त्वां सन्निरुध्यायतुर्गुरो ! ॥

सन्निरोधो भव नमः । सकलीकरणमुद्रया सकलीभव नमः, तच्च देवताऽङ्गन्यासात् । अवगुण्ठनमुद्रया,

अभक्तावाङ्मनश्चक्षुः श्रोत्रदूराणि तद्युते ।
स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ॥

अवगुण्ठितो भव नमः । लेलिहानमुद्रया, प्राणप्रतिष्ठामन्त्रेण प्राणप्रतिष्ठां कुर्यात् ।

यथा—ॐ ह्राँ ह्रीं क्रों यं रं वं लं शं षं सं ह्रों ॐ क्षं सं हं सः ह्रीं ॐ पीताम्बरायाः यन्त्रमूर्तेः प्राणा इह प्राणाः ।

ॐ आँ ह्लीं क्रों० पीताम्बरायाः यन्त्रमूर्तेः जीव इह स्थितः । ॐ आँ ह्लीं क्रों० पीताम्बरायाः यन्त्रमूर्तेः सर्वेन्द्रियाणि० । ॐ आँ ह्लीं क्रों० पीताम्बरायाः यन्त्रमूर्तेः वाङ्-मनश्चक्षुः-श्रोत्र-घ्राण-प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । ॐ क्षं सं हं सः ह्लीं ॐ ।

ततो मूलान्ते 'वं' इति धेनुमुद्रया, अमृतीकृत्य, मूलान्ते महामुद्रया परमीकृत्य, ततः मूलमन्त्रपुटितमातृकाक्षराणि देवताङ्गे विन्यसेत् । ततो देव्याः यथोपचारैः पूजां कुर्यात् ।

यथा—(ॐ नमः)

यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भवः ।
तस्यै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ॥

श्रीपीताम्बरे देवि ! पाद्यं गृहाण नमः । ॐ ॐ वं ।

वेदानामपि वेदाय देवानां देवतात्मने ।
आचामं कल्पयामीशे शुद्धानां शुद्धिहेतवे ॥

श्रीपीताम्बरे देवि ! आचमनं गृहाण नमः । ॐ स्वाहा ।

तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।
तापत्रयविनिर्मुक्तं तवाऽर्घ्यं कल्पयाम्यहम् ॥

श्रीपीताम्बरे देवि ! अर्घ्यं गृहाण नमः । ॐ वं ।

सर्वकालुष्यहीनाय परिपूर्णा सुखात्मने ।
मधुपर्कमिदं देवि ! कल्पयामि प्रसीद मे ॥

श्रीपीताम्बरे देवि ! मधुपर्कं गृहाण नमः । ॐ वं ।

उच्छिष्टोऽप्यशुचिर्वाऽपि यस्य स्मरणमात्रतः ।
शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम् ।।

श्रीपीताम्बरे देवि ! मधुपर्कान्ते पुनराचमनीयं गृहाण नमः ।

स्नेहं गृहाण स्नेहेन लोकनाथे महाशये ।
सर्वलोकेषु शुद्धात्मन् ! ददामि स्नेहमुत्तमम् ।।

श्रीपीताम्बरे देवि ! स्नेहं गृहाण नमः ।

परमानन्दबोधाब्धि-निमग्न-निजमूर्त्तये ।
साङ्गोपाङ्गमिदं स्नानं कल्पयामीह देवि ते ।।

श्रीपीताम्बरे देवि ! महास्नानं गृहाण नमः । एतदनन्तरं शङ्खेन देव्या महाभिषेकं कुर्यात् । तच्च देवीसूक्तेन मूलमन्त्रेण वा कुर्यात् ।

मायाचित्र-पटाच्छिन्न-निजगुह्योरुतेजसे ।
निरावरण-विज्ञानं वासस्ते कल्पयाम्यहम् ।।

श्रीपीताम्बरे देवि ! वस्त्रं गृहाण नमः ।

यमाश्रित्य महामाया जगत्संमोहिनी सदा ।
तस्यै ते परमेशायै कल्पयाम्युत्तरीयकम् ।।

श्रीपीताम्बरे देवि ! उत्तरीयवस्त्रं गृहाण नमः । पूर्वोक्तमन्त्रेण वस्त्रान्ते आचमनीयं गृहाण नमः ।

यस्य शक्तित्रयेणेदं संप्रोतमखिलं जगत् ।
यज्ञसूत्राय तस्यै ते यज्ञसूत्रं प्रकल्पये ।।

श्रीपीताम्बरे देवि ! यज्ञोपवीतं गृहाण नमः। यज्ञोपवीतान्ते पुनराचमनीयं गृहाण नमः।

स्वभावसुन्दराङ्गायै नानाशक्त्याश्रयायै ते।
भूषणानि विचित्राणि कल्पयाम्यमरार्चिते॥

श्रीपीताम्बरे देवि ! भूषणानि गृहाण नमः। पुनराचमनीयं गृहाण नमः। न्यासक्रमेण मूलमन्त्रपुटितं मातृकैकाक्षरं कृत्वा, गन्धाद्यैः देवीमङ्गादीनभ्यर्च्य, ततः पूजयेत्। यथा—

परमानन्द–सौरभ्य–परिपूर्ण–दिगन्तरे।
गृहाण परमं गन्धं कृपया परमेश्वरि !॥

श्रीपीताम्बरे देवि ! गन्धं गृहाण नमः। ततो गन्धमुद्रां प्रदर्शयेत्। सा गन्धमुद्रा कनिष्ठाऽङ्गुष्ठयोगेन भवति। तत आवरणार्चनं कुर्यात्।

## आवरणपूजा

### प्रथमावरणार्चनम्

यथा बिन्दुमध्ये—'ॐ ह्लीं' बगलामुखि ! सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा।' बगलामुखीदेव्यै नमः, बगलामुखीदेव्यम्बां श्रीपादुकां पूजयामि तर्पयामि नमः। देव्या वामे–ऐं क्रों श्रीं क्रोधिन्यै नमः, क्रोधिन्यम्बां श्रीपादुकां पूजयामि नमः। देव्या दक्षिणे—ह्लीं स्तम्भिन्यै नमः, स्तम्भिन्यम्बां

श्रीपादुकां०। देव्या अग्रे—ह्लीं रतिधामधारिण्यै नमः, रतिधामधारिण्यम्बां श्रीपादुकां० । देव्या दक्षे—ॐ उड्डियानपीठाय नमः, उड्डियानपीठदेव्यम्बां श्रीपादुकां० । देव्याः पश्चिमे—पूर्णगिरिपीठाय नमः, पूर्णगिरिपीठदेव्यम्बां श्रीपादुकां पूजयामि०। देव्या उत्तरे—कामरूपपीठाय नमः, कामरूपपीठदेव्यम्बां श्रीपादुकां पूजयामि० । त्रिकोणाग्रे—ॐ सं सत्त्वाय नमः, सत्त्वश्रीपादुकां० । ॐ रं रजसे नमः, रजःश्रीपादुकां पूजयामि० । ॐ तं तमसे नमः, तमःश्रीपादुकां पूजयामि० । त्रिकोणाद् बहिः—वायव्यादि-ईशानान्ते—ॐ दिव्यौघाय नमः, दिव्यौघःश्रीपादुकां पूजयामि०। ॐ सिद्धौघाय नमः, सिद्धौघःश्रीपादुकां पूजयामि० । ॐ मानवौघाय नमः, मानवौघः श्रीपादुकां पूजयामि० । ॐ श्रीगुरुभ्यो नमः, श्रीपादुकां पूजयामि० । ॐ परमगुरुभ्यो नमः, परमगुरुश्रीपादुकां पूजयामि० । ॐ परात्परगुरुभ्यो नमः, परात्परगुरुश्रीपादुकां पूजयामि० । ॐ परमेष्ठिगुरुभ्यो नमः, परमेष्ठिगुरुश्रीपादुकां पूजयामि० । त्रिकोणान्तः-अग्नीशासुर-वायव्याग्रे दिक्षु च षडङ्गं पूजयेत् । यथा—ॐ ह्लीं हृदयाय नमः, हृदयदेव्यम्बां श्रीपादुकां पूजयामि०। बगलामुखि शिरसे स्वाहा, शिरःदेव्यम्बां श्रीपादुकां पूजयामि० । सर्वदुष्टानां शिखायै वषट्, शिखादेव्यम्बां श्रीपादुकां पूजयामि०। वाचं मुखं पदं स्तम्भय कवचाय हुम्, कवचदेव्यम्बां श्रीपादुकां पूजयामि० । जिह्वां कीलय

नेत्रत्रयाय वौषट्, नेत्रत्रयदेव्यम्बां श्रीपादुकां पूजयामि० । बुद्धि विनाशय ह्लीं ॐ स्वाहा अस्त्राय फट्, अस्त्रदेव्यम्बां श्रीपादुकां पूजयामि०। त्रिकोणस्था मातरः साङ्गाः स-परिवाराः स-वाहनाः सायुधाः स-शक्तिकाः यथोपचारैः पूजिताः वरदाः सन्तु । ॐ श्रीबगलामुखीदेव्यै नमः । इति सामान्यार्घ्येण जलमुत्सृजेत् ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।

इति मन्त्रेण पुष्पाञ्जलिं दद्यात् ।

इति प्रथमावरणार्चनम् ।

द्वितीयावरणार्चनम्

षट्कोणेषु देव्यग्रे—ॐ सुभगायै नमः, सुभगादेव्यम्बां श्रीपादुकां पूजयामि नमः । देव्या अग्निकोणे—ॐ भगसर्पिण्यै नमः, भगसर्पिणीदेव्यम्बां श्रीपादुकां पूजयामि नमः । देव्या ईशानकोणे—ॐ भगावहायै नमः, भगावहादेव्यम्बां श्रीपादुकां पूजयामि नमः । देव्याः पश्चिमे—ॐ भगमालिन्यै नमः, भगमालिनीदेव्यम्बां श्रीपादुकां पूजयामि०। देव्याः नैर्ऋत्यकोणे—ॐ भगशुद्धायै नमः, भगशुद्धादेव्यम्बां श्रीपादुकां पूजयामि० । देव्याः वायव्यकोणे—ॐ भगनिपातिन्यै नमः, भगनिपातिनीदेव्यम्बां श्रीपादुकां पूजयामि० । षट्कोणस्था मातरः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सवाहनाः यथोपचारैः पूजिताः

वरदाः सन्तु । ॐ श्रीबगलामुखीदेव्यै नमः । इति सामान्या-र्घ्यजलम् उत्सृजेत् ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

इति मन्त्रेण पुष्पाञ्जलिं दद्यात् ।

इति द्वितीयावरणार्चनम् ।

### तृतीयावरणार्चनम्

अष्टदलकेशरेषु ब्रह्माद्या अष्टमातरः पूज्याः । यथा—
ॐ ब्राह्म्यै नमः, ब्राह्मीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ माहेश्वर्यै नमः, माहेश्वरीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ कौमार्यै नमः, कौमारीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ वैष्णव्यै नमः, वैष्णवीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ वाराह्यै नमः, वाराहीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ इन्द्राण्यै नमः, इन्द्राणीदेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ चामुण्डायै नमः, चामुण्डादेव्यम्बां श्रीपादुकां पूजयामि० ।
ॐ महालक्ष्म्यै नमः, महालक्ष्मीदेव्यम्बां श्रीपादुकां पूजयामि० । अष्टदलकेशरस्थाः मातरः साङ्गाः सपरिवाराः सवाहनाः सायुधाः स-शक्तिकाः यथोपचारैः पूजिताः वरदाः सन्तु । ॐ श्रीबगलामुखीदेव्यै नमः । इति सामान्यार्घ्यजल-मुत्सृजेत् ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

इति मन्त्रेण पुष्पाञ्जलिं दद्यात् ।

इति तृतीयावरणार्चनम् ।

चतुर्थावरणार्चनम्

अष्टदलेषु जयाद्यष्टमातरः पूज्याः । यथा—ॐ जयायै नमः, जयादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ विजयायै नमः, विजयादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ अजितायै नमः, अजितादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ अपराजितायै नमः, अपराजितादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ जम्भिन्यै नमः, जम्भिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ स्तम्भिन्यै नमः, स्तम्भिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ मोहिन्यै नमः, मोहिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ आकर्षण्यै नमः, आकर्षणीदेव्यम्बां श्रीपादुकां पूजयामि० । अष्टदलस्थाः मातरः साङ्गाः सपरिवाराः सवाहनाः सायुधाः स-शक्तिकाः यथोपचारैः पूजिताः वरदाः सन्तु । 'ॐ श्रीबगलामुखीदेव्यै नमः' इति सामान्यार्घ्यजलमुत्सृजेत् ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥

इति मन्त्रेण पुष्पाञ्जलिं दद्यात् ।

इति चतुर्थावरणार्चनम् ।

पञ्चमावरणार्चनम्

ततः पत्राग्रेषु—ॐ असिताङ्गभैरवाय नमः, असिताङ्ग-भैरवश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ रुरुभैरवाय नमः, रुरुभैरवश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ चण्ड-भैरवाय नमः, चण्डभैरवश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ क्रोधभैरवाय नमः, क्रोधभैरवश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ उन्मत्तभैरवाय नमः, उन्मत्तभैरव-श्रीपादुकां पूजयामि० । ॐ कपालभैरवाय नमः, कपालभैरव-श्रीपादुकां पूजयामि० । ॐ भीषणभैरवाय नमः, भीषणभैरव-श्रीपादुकां पूजयामि० । ॐ संहारभैरवाय नमः, संहारभैरव-श्रीपादुकां पूजयामि० । अष्टपत्राग्रस्थाः अष्टभैरवाः साङ्गाः स-परिवाराः स-वाहनाः स-शक्तिकाः सायुधाः यथोपचारैः पूजिताः वरदाः सन्तु । 'ॐ श्रीबगलामुखीदेव्यै नमः ।' इति सामान्यार्घ्यजलमुत्सृजेत् ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

इति मन्त्रेण पुष्पाञ्जलिं दद्यात् ।

इति पञ्चमावरणार्चनम् ।

षष्ठावरणार्चनम्

ततः षोडशपत्रेषु षोडशशक्तयः पूज्याः । यथा—ॐ मङ्गलायै नमः, मङ्गलादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ जम्भिन्यै

नमः, जम्भिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ स्तम्भिन्यै नमः, स्तम्भिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ मोहिन्यै नमः, मोहिनीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ वश्यायै नमः, वश्यादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ वलायै नमः, बलादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ बलाकायै नमः, बलाकादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ भूधरायै नमः, भूधरादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ कल्मषायै नमः, कल्मषादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ धात्र्यै नमः, धात्रीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ कमलायै नमः, कमलादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ कालकर्षण्यै नमः, कालकर्षणीदेव्यम्बां श्रीपादुकां पूजयामि० । ॐ भ्रामिकायै नमः, भ्रामिकादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ मन्दगमनायै नमः, मन्दगमनादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ भोगस्थायै नमः, भोगस्थादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ भाविकायै नमः, भाविकादेव्यम्बां श्रीपादुकां पूजयामि० । ॐ श्रीबगलामुखीदेव्यै नमः । इति सामान्यार्घ्यजलमुत्सृजेत् । साङ्गायै सपरिवारायै सवाहनायै सायुधायै सशक्तिकायै यथोपचारैः पूजिताः वरदाः सन्तु ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठावरणार्चनम् ॥

इति षष्ठावरणार्चनम् ।

सप्तमावरणार्चनम्

भूपुरपूर्वे—ॐ गं गणेशाय नमः, गणेशश्रीपादुकां पूजयामि०। दक्षिणे—ॐ वं वटुकाय नमः, वटुकश्रीपादुकां पूजयामि०। पश्चिमे—ॐ यं योगिनीभ्यो नमः, योगिनी-श्रीपादुकां पूजयामि०। उत्तरे—ॐ क्षं क्षेत्रपालाय नमः, क्षेत्रपालश्रीपादुकां पूजयामि०। पूर्वादिक्रमेण—ॐ लं इन्द्राय साङ्गाय सपरिवाराय सवाहनाय सशक्तिकाय सायुधाय बगला-पार्षदाय नमः, इन्द्रश्रीपादुकां पूजयामि०। ॐ रं अग्नये नमः, अग्निश्रीपादुकां पूजयामि०। ॐ मं यमाय नमः, यम-श्रीपादुकां०। ॐ क्षं निर्ऋतये नमः, निर्ऋतिश्रीपादुकां०। ॐ वं वरुणाय नमः, वरुणश्रीपादुकां०। ॐ यं वायवे नमः, वायुश्रीपादुकां०। ॐ खं सोमाय नमः, सोमश्रीपादुकां०। ॐ हं ईशानाय नमः, ईशानश्रीपादुकां०। निर्ऋति-वरुणयोर्मध्ये—ॐ अं अनन्ताय नमः, अनन्तश्रीपादुकां०। इन्द्रेशानयोर्मध्ये—ॐ ह्रीं ब्रह्मणे नमः, ब्रह्मश्रीपादुकां०। ॐ श्रीबगलामुखीदेव्यै नमः। इति सामान्यार्घ्यजलमुत्सृजेत्। भूपुरस्थाः देवा इन्द्रादयः साङ्गाः सपरिवाराः सवाहनाः सशक्तिकाः सायुधाः यथोपचारैः पूजिताः वरदाः सन्तु।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥

इति सप्तमावरणार्चनम्।

अष्टमावरणार्चनम्

तत्रैव—ॐ वं वज्राय नमः, वज्रश्रीपादुकां०। ॐ शं शक्तये नमः, शक्तिश्रीपादुकां०। ॐ दं दण्डाय नमः, दण्डश्रीपादुकां०। ॐ खं खड्‌गाय नमः, खड्‌गश्रीपादुकां०। ॐ पं पाशाय नमः, पाशश्रीपादुकां०। ॐ अं अङ्‌कुशाय नमः, अङ्‌कुशश्रीपादुकां०। ॐ गं गदायै नमः, गदाश्रीपादुकां०। ॐ त्रिं त्रिशूलाय नमः, त्रिशूलः श्रीपादुकां०। ॐ चं चक्राय नमः, चक्रः श्रीपादुकां०। ॐ अं अब्जाय नमः, अब्जः श्रीपादुकां०। भूपुरस्थाः वज्रादयः साङ्गाःसपरिवाराः सायुधाः सशक्तिकाःसवाहनाः यथोपचारैः पूजिताः वरदाः सन्तु। 'ॐ श्रीबगलामुखीदेव्यै नमः।' इति सामान्यार्घ्यजलमुत्सृजेत्।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।<br>
भक्त्या समर्पये तुभ्यमष्टमावरणार्चनम्॥

इत्यष्टमावरणार्चनम्।

इत्यावरणपूजां कृत्वा, मूलमन्त्रमुच्चार्य, पीताम्बरे देवि! गन्धं गृहाण नमः। पीताम्बरे देवि! अक्षतान् गृहाण नमः। पीताम्बरे देवि! पुष्पाणि वौषट् गृहाण नमः। धूपपात्रं 'ॐ फट्' इति प्रोक्ष्य, नमो मन्त्रेण पुष्पं दत्वा, वामया तर्जन्या संस्पृशन् मूलमन्त्रं पठित्वा,

ॐ वनस्पतिरसोपेतो गन्धाढ्यः सुमनोहरः।<br>
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

साङ्गायै सपरिवारायै पीताम्बरादेव्यै धूपं समर्पयामि नमः। इति शङ्खजलमुत्सृज्य, तर्जन्यङ्गुष्ठयोगेन धूपमुद्रां प्रदर्श्य, 'ॐ जयध्वनि मन्त्रमातः स्वाहा' इति मन्त्रेणार्चितां घण्टां वामहस्तेन वादयन् देवतागुणनामयशः कीर्तयन् देवीं धूपयेत्। दीपम् अस्त्रेण प्रोक्ष्य, नमो मन्त्रेण पुष्पं दत्वा, वाममध्यमया दीपपात्रं स्पृशन् मूलमन्त्रं पठित्वा,

ॐ सुप्रकाशो महादीपः सर्वतस्तिमिरापहः।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

ॐ साङ्गायै सपरिवारायै बगलामुखीदेव्यै दीपं समर्पयामि नमः। इति शङ्खजलमुत्सृज्य, मध्यमाऽङ्गुष्ठयोगेन दीपमुद्रां प्रदर्श्य, घण्टां वादयन् देव्यै दर्शयेत्।

विन्दुत्रिकोणवृत्तचतुरस्रात्मकं मण्डलं विलिख्य, तत्र नैवेद्यं साधारं संस्थाप्य, ततोऽस्त्रमन्त्रजप्तजलेन प्रोक्षयेत्। ततश्चक्र-मुद्रयाऽभिरक्ष्य वायुबीजेन द्वादशवाराभिमन्त्रितजलेन हविः सम्प्रोक्ष्य, तदुत्थवायुना तद्दोषं संशोष्य, दक्षिणकरतलेऽग्निबीजं विचिन्त्य, तद्पृष्ठलग्नं वामकरतलं कृत्वा, नैवेद्यं प्रदर्श्य, तदुत्थामृतधारयाऽऽप्लावितं विभाव्य, मूलमन्त्रजप्तजलेन संप्रोक्ष्य, तदखिलममृतात्मविध्यात्वा, तद् स्पृष्ट्वा मूलमन्त्र-मष्टधा जप्त्वा, धेनुमुद्रां प्रदर्श्य, जल-गन्ध-पुष्पैरभ्यर्च्य, देव्यै पुष्पाञ्जलिं समर्प्य, तन्मुखात्तेजो निर्गतम्, इति विध्यात्वा,

वामाङ्गुष्ठेन मुख्यं नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा, स्वाहान्तं मूलमन्त्रं पठेत् ।

ॐ सत्पात्रसिद्धं सुहविर्विविधानेनैकभक्षणम् ।
निवेदयामि देवेशि ! तद्गृहाणाऽनुकम्पया ।।

इति पठित्वा, साङ्गायै सपरिवारायै बगलामुखीदेव्यै नैवेद्यं समर्पयामि नमः । इति जलमुत्सृज्य, धेनुमुद्रां प्रदर्शयेत् । स-पुष्पाभ्यां हस्ताभ्यां नैवेद्यपात्रं त्रिः प्रोक्षयन् 'निवेदयामि भवत्यै जुषाणेदं हविर्देवि' इति जपेत् । ततो वामकरेण विकचोत्पलसन्निभां ग्रासमुद्रां दक्षिणकरेण प्राणादि-मुद्राश्च दर्शयन् अनामा-कनिष्ठाङ्गुष्ठयोगेन 'ॐ प्राणाय स्वाहा ।' तर्जनी-मध्यमा-ऽङ्गुष्ठयोगेन 'ॐ अपानाय स्वाहा ।' मध्यमा-ऽनामाङ्गुष्ठयोगेन 'ॐ व्यानाय स्वाहा' । तर्जनी-मध्यमाऽनामा-ङ्गुष्ठयोगेन 'ॐ समानाय स्वाहा ।' तर्जनी-मध्यमा-ऽनामा-कनिष्ठिकाऽङ्गुष्ठयोगेन 'ॐ उदानाय स्वाहा ।' उपचाराणाम-न्तराऽन्तरा, पुष्पाञ्जलिं दत्वा, जलं दत्वा, हस्तं प्रक्षालयेत् ।

ततः दक्षिण-स्थण्डिलं कृत्वा, पञ्चभूसंस्कारांश्च कृत्वा, अग्निं तत्राऽऽनीय, मूलेन वीक्ष्य, 'फड्' इति सम्प्रोक्ष्य, कुशैः सन्ताड्य, 'हुँ' इत्यभ्युक्ष्य, उदकेन त्रिवारं परिसमूह्य, आत्माभिमुखवह्निं संस्थाप्य, 'ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा' इति मन्त्रेण समभ्यर्च्य, तत्रेष्टदेवमावाह्य, गन्ध-पुष्पैः सम्पूज्य, भूरादिचतुष्टयं हुत्वा,

मूलेन पञ्चविंशतिर्हुत्वा, पुनः भूरादिचतुष्टयं च हुत्वा, 'ॐ अग्नये स्विष्टकृते स्वाहा' इति हुत्वा, यन्त्रे इष्टदेवतां नियोज्य, वह्निं विसृज्य, मूलमन्त्रेण आचमनीयं दत्वा, देवतां विनिर्गत-तेजः देव्या वह्नौ संयोज्य, सोदकं नैवेद्यांशं गृहीत्वा, 'ॐ उच्छिष्ट चाण्डालिनि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः' इति मन्त्रेण पात्रान्तरे सुमुख्यै नैवेद्यं दत्वा, देवतायाः हस्तप्रक्षालनार्थं जलं दत्वा, मूलमन्त्रेण करोद्वर्तनार्थं चन्दनं समर्पयामि नमः, ताम्बूलं समर्पयामि नमः। लवणमुत्तार्य आरार्तिकं कृत्वा, आदर्श-छत्र-चामराणि च दत्वा, कृताञ्जलिं पठेत्।

बुद्धिः सवासनाक्लृप्ता तर्पणं मङ्गलानि च।
मनोवृत्तिर्विचित्रा ते नृत्यरूपेण कल्पिता ॥१॥
ध्वनयो गीतरूपेण शब्दा वाद्यप्रभेदतः।
क्षत्राणि नवपद्मानि कल्पितानि मया शिवे ॥२॥
सुषुम्णा ध्वजरूपेण प्राणाद्याश्चामरात्मना।
अहङ्कारं गजत्वेन वेगः क्लृप्तो रथात्मना ॥३॥
इन्द्रियाण्यश्वरूपाणि शब्दादिरथवर्त्मना।
मनःप्रग्रहरूपेण बुद्धिः सारथिरूपतः।
सर्वमन्यत्तथा क्लृप्तं तवोपकरणात्मना ॥४॥

इति श्लोकान् पठित्वा, जपरहस्यक्रमेण जपं कुर्यात्।

यथा—शिरसि मूलं दशधा प्रजप्य, मुखे प्रणवं सप्तवारं जपेत्। तथा कण्ठे स्त्रीं बीजं दशधा प्रजप्य, नाभौ 'ॐ अं

मूलेन, ऐं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः, कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं यं लं क्षं, इति जपेत्। प्रणवपुटितं मूलं सप्तवारं प्रजप्य, तथा मायापुटितं मूलं सप्तवारं जपेत्।

शापोद्धारमन्त्रम् एकविंशतिवारं प्रजप्य, मालापूजनं कुर्यात्। यथा—

ॐ माले माले महामाले सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तं तस्मान्मे सिद्धिदा भव॥

इति प्रार्थ्य, 'ॐ सिध्यै नमः' इति गन्ध-पुष्पाभ्यां सम्पूज्य, यथाशक्तिमूलमन्त्रं जप्त्वा।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणाऽस्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि! त्वत्प्रसादान् महेश्वरि!॥

इत्यनेन जपं देव्यै निवेदयेत्। ततः कवच-स्तोत्र-सहस्र-नामादिभिः स्तुतिं कुर्यात्।

ततः पञ्चोपचारैः उत्तरपूजनं कृत्वा, एतत्पराङ्मुखमर्घ्यं बगलादेव्यै समर्पयामि नमः। इति दत्वा, गन्ध-पुष्पैः शङ्खं पूजयेत्। ततः प्रदक्षिणां कृत्वा, सामान्यार्घ्यजलमादाय, इतः पूर्वं प्राण-बुद्धि-देह-धर्माधिकारतो जाग्रत्-स्वप्न-सुषुप्त्यवस्था, सुमनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। मां मदीयं च सकलं

बगलायै समर्पये। 'ॐ तत्सत्' इति ब्रह्मार्पणमन्त्रेण आत्मानं समर्प्य, पुष्पं गृहीत्वा,

ॐ यद् दत्तं भक्तिभावेन पत्रं पुष्पं फलं जलम्।
आवेदितं च नैवेद्यं तद् गृहाणाऽनुकम्पया॥
मन्त्रहीनं क्रियाहीनं विधिहीनं च यद् भवेत्।
तत्सर्वं क्षम्यतां देवि ! प्रसीद परमेश्वरि !॥
आवाहनं न जानामि न जानामि विसर्जनम्।
पूजनं नैव जानामि क्षमस्व परमेश्वरि !॥
कर्मणा मनसा वाचा त्वत्तो नाऽन्या गतिर्मम।
अन्तश्चारेण भूतानां त्वं गतिः परमेश्वरि !॥
क्षमस्व देवदेवेशि ! बगले ! भुवनेश्वरि।
तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तु मे॥

इति पुष्पाञ्जलिं दत्वा,

ॐ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि !।
यत्र ब्रह्मादयो देवाः न विदुः परमं पदम्॥

इति संहारमुद्रया निर्माल्यं समुद्धृत्य, तत्तेजः समाघ्राय, पूरकेन सहस्रारे नीत्वा, तत्र क्षणं तेजोरूपं ध्यात्वा,

तिष्ठ तिष्ठ परं स्थानं स्वस्थानं परमेश्वरि !।
यत्र ब्रह्मादयो देवाः सुरास्तिष्ठन्तु मे हृदि॥

इति हृत्कमले संस्थाप्य, मानसोपचारैः सम्पूज्य, कृताञ्जलिः सन् पठेत्—

यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ।
तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥

इति प्रार्थ्य, 'ॐ ह्रां ह्रीं हंसः सूर्याय इदमर्घ्यं न मम' इत्यर्घ्यं दत्वा, प्राणायाम-षडङ्गं कृत्वा, गुरुं प्रणम्य, निर्माल्यं शिरसि धृत्वा, यथासुखं विहरेत् ।

इति बगला-नित्यार्चन-पद्धतिः समाप्ता ।

●

# बलिदानम्

केषाञ्चिन्मते, हवनानन्तरं बलिदानं पूजनान्ते वा । त्रिकोण-वृत्त-चतुरस्रमण्डलं कृत्वा, 'ॐ आधारशक्तये नमः' इति सम्पूज्य, तत्र साधारं बलिपात्रं संस्थाप्य, 'ॐ बलिद्रव्याय नमः' इति गन्ध-पुष्पाभ्यां सम्पूज्य, अङ्गुष्ठा-ऽनामिकाभ्याम् 'ॐ एह्येहि देविपुत्र बटुकनाथ कपिलजटाभारभासुर त्रिनेत्रज्वालामुख सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा ।' एष बलिः बटुकाय नमः । ततः—

बलिदानेन सन्तुष्टः बटुकः सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूत-बेताल-सेवितः ॥

इति प्रार्थयेत् । अङ्गुष्ठ-तर्जनीभ्यां 'ॐ क्षां क्षीं क्षूं क्षैं

क्षौं क्षः हुं स्थानक्षेत्रपालेशं सर्वकामं पूरय स्वाहा।' एष बलिः क्षेत्रपालाय नमः।

वसामि तस्य क्षेत्रेऽस्मिन् क्षेत्रपालस्य किङ्करः।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे॥

तर्जनी-मध्यमा-ऽनामाङ्गुष्ठैः 'ॐ ॐ ॐ सर्वयोगिनीभ्यः सर्वडाकिनीभ्यः सर्वशाकिनीभ्यस्त्रैलोक्यवासिनीभ्यो नमः' इमं पूजाबलिं गृह्णीत हुं फट् स्वाहा। एष बलिः योगिनीभ्यां नमः।

या काचिद्योगिनीरौद्रा सौम्या घोरतरा परा।
खेचरी भूचरी व्योमचरी प्रीती सदाऽस्तु मे॥

इति प्रार्थयेत्।

अङ्गुष्ठ-मध्यमाभ्याम् 'ॐ गां गीं गूं गं गणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा।' एष बलिः गणपतये नमः।

अनेन बलिदानेन विघ्नवर्गसमन्वितः।
विघ्नराजेश्वरो देवो मे प्रसीदतु सर्वदा॥

इति प्रार्थयेत्।

सर्वाङ्गुलीभिः—'ॐ ॐ ॐ सर्वभूतेभ्यः सर्वभूतपतिभ्यो नमः।' एष बलिः सर्वभूतेभ्यो नमः।

ॐ भूता ये विविधाकारा दिव्यभौमान्तरिक्षगाः।
पातालतलसंस्थाश्च शिवयोगेन भाविताः॥

ध्रुवाद्याः सत्यसन्धाश्च इन्द्राद्याश्च व्यवस्थिताः ।
तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥

इति प्रार्थयेत् ।

अथैषां मुद्रालक्षणानि—
अङ्गुष्ठाऽनामिकाभ्यां तु वटुकस्य भवेद् बलिः ।
तर्जनीमध्यमानामाऽङ्गुष्ठैः स्याद् योगिनीबलिः ॥
अङ्गुलीभिश्च सर्वाभिर्दद्याद् भूतबलिं द्विजः ।
अङ्गुष्ठ-तर्जनीभ्यां तु क्षेत्रपालबलिर्भवेत् ॥
अङ्गुष्ठ-मध्यमाभ्यां तु गणराजेश्वरस्य च ।

बगलायन्त्रं विलिख्य, 'ॐ आं आधारशक्तये नमः' इति सम्पूज्य, तत्र साधारं बलिं संस्थाप्य, 'बलिद्रव्याय नमः' इति सम्पूज्य, 'ॐ हुँ हुँ हुँ ह्लीं बगले देवि ! एह्येहि मम शत्रूणां रुद्रसूच्यग्रेण वाचं मुखं पदं स्तम्भय स्तम्भय बलिं गृह्ण गृह्ण हुँ फट् स्वाहा ।' एष बलिः श्रीबगलादेव्यै नमः । हवनान्ते बलिः कर्तव्या, पूजान्ते वा ।

वटुकादीन् समभ्यर्च्यैवं कुलदीपान् प्रदर्शयेत् ।
देवीभक्तः सुपिष्टेन कुर्याद् वेदाङ्गुलोन्नतान् ॥
दीपान् डमरुकाकारान् त्रिकोणानतिशोभनान् ।
कर्षाज्यग्राहिणः कुर्यान्न सप्ताऽथ पञ्च च ॥
अन्तस्तेजो बहिस्तेजः एकीकृत्य मितप्रभान् ।
समस्तचक्र-चक्रेशि सुते देवि नवात्मके ॥
आरार्तिकमिदं देवि ! गृहाण मम सिद्धये ॥

इति बगलोपासनपद्धतौ सं० १९४१ पौषमासे कृष्णपक्षे षष्ठयां तिथौ पण्डित—श्रीरमानाथव्यास-विरचिता बगला-नित्यार्चन-पद्धतिः समाप्ता ।

## सदीपस्तुतिः ( बगला आरती )

जय सुरवन्दिनि जय जय जय ललने !
कुरु कुरु चेतः सदनं सदयं मम बगले !
जय जय जय बगले ! ॥ १ ॥

जन्मनि जन्मनि हित्वा तव पदवर नित्यं,
भुक्तो वारं-वारं विष-विषयं भुङ्क्ते ।
गृहिणी सुतयोरर्थे वय एतत् क्षपितं
सम्प्रति को वा बगले त्राणे मम सबलः ।
जय जय जय बगले ! ॥ २ ॥

को वा त्वन्महिमानं कलयितुमप्यधिपः
स्याद् वै वेदादीनां मनसो नो विषयः ।
तस्मात् केवलमम्ब ! त्रिपुरे ! बगलां
वेत्स्येतद्धि प्रकटं निवसेन्मम वदने ।
जय जय जय बगले ! ॥ ३ ॥

कृत्वा मातर्बगले कमला कृति-युगलं
भुजभ्यां नत्वा नत्वा तव पादद्वितयम् ।
याचे जनिमृतिसरणिर्यदि भूयात्
तदपि त्वत्पद-पङ्कज-विस्मृतिरमले न च भूयात् ।
जय जय जय बगले ! ॥ ४ ॥

कश्चन त्राता बगले ! भवकण्टकभूत-
स्तन्मध्यस्था नारी कथमप्यवशिष्टा ।
धारकहिमवदवनी त्वणुवन्निजमौलौ
भारः किमयं भविता त्वणुवच्चोद्धरणे ।
जय जय जय बगले ! ॥ ५ ॥

त्वद्यन्त्रस्था देव्यो जगतो हितकर्त्र्यो-
र्ब्रह्माण्याद्याः सर्वाः करुणारसहृदयाः ।
मामप्यम्ब ! त्रातुं हृदयं कलयतु हे
मित्र जननी भगिनी स्वजनः प्रियो भूयात् ।
जय जय जय बगले ! ॥ ६ ॥

पीतांशुक-परिधानं फलदाधिपवदनं
मल्ली-चम्पक-माला-भूषित-कर-कलितम् ।
मधुमदमञ्जुलहासं वपुरेतद्विमलं
दृष्ट्वा मुह्यति चेतस्त्वरितं जगदीशः ।
जय जय जय बगले ! ॥ ७ ॥

वज्रक-मुद्गर-पाशं स्वतुलं तव चास्त्रं
मणिमय-रत्न-विनिर्मित-भूषणमति-विमलम् ।
हेम-द्युति-छविभासं कमलारुणचरणं
एवं कान्तिः शान्तिरनुदिनमपि भूयात् ।
जय जय जय बगले ! ॥ ८ ॥

मध्ये दीपशिखायामालीशतयूथै-
र्निजकर-नादित-ध्वनिभिर्गुञ्जित-दिक्पटलाम् ।
क्रीडद्-गायद्-हासैर्नन्दित-मृदुहृदयां
भावय चेतः सततं जगदम्बां सदयाम् ।
जय जय जय बगले ! ॥ ९ ॥

भव-भय-सागरपारं कर्तुं तव क्षमता
आर्त-समागत-लोका वयमिह शरणमिता ।
सर्वा एवं लीला जगतां जनलखिता
द्रव हृदयेन दयार्द्रे जनतायै सुचिरम् ।
जय जय जय बगले ! ॥१०॥

नाना-मणिमय-मण्डित-किसलय-भुजयुगले
किङ्किण-नूपुर-नादित-ध्वनिभि-र्दिक्पटले ।
उद्यद्दिनकर-किरण प्रतिभासित-रुचिरे
किं ध्यानेन हि दुर्लभमिह तव बगले ।
जय जय जय बगले ! ॥११॥

जनन-स्थिति-लय-जगतां रूपं प्रतिकल्पं
भ्रुकुटि-विलास-प्रभावैर्जननि त्वं कुरुषे ।
मनसा कोऽस्ति समर्थः स्मरणे तव चरितम्
श्रुतयः स्मृतिभिश्चकिता नहि नहि नहि कथिताः ।
जय जय जय बगले ! ॥१२॥

पाशायुध-वर-चम्पक-रुचिकर-धृतमाले
पीताम्बर-परिधाना-पविभूषित-हस्ते ।
रवि-शशिलोचन-शिखरे हुतवह-कृतनयने
मानस-ध्यान-कृताञ्जलि-चरणौ जननि तव वन्दे ।
जय जय जय बगले ! ॥१३॥

सर्वं खल्विदमखिलं भुवनं तव रूपं
स्तौति सदा तव भक्त आश्रित-धृत-चरणः ।
एवं स्तौति जनो यो मनसा कृतध्यानः
वरदा तस्मै प्रभवति बगला मुनिहसा ।
जय जय जय बगले ! ॥१४॥

पद्यैरेतैरमलैरिह यो जगदम्बां
कर्पूरार्त्या भजते परया किल भक्त्या ।
तस्य क्षोणीपतयो वशगा धन-धान्यैः
पुत्राः पौत्रा बहुधा विमला तद्गेहे ।
जय जय जय बगले ! ॥१५॥

रमानाथेन व्यासेन स्तोत्रमेतद् विधाय च ।
बगलां देवीं मुदां कृत्वा वाञ्छितं सुकृतं कृतम् ॥

इति देवरिया-मण्डलान्तर्गत-'मझौली राज्य' (सम्प्रति वाराणसी) निवासि-श्रीयुक्तपण्डित-श्रीकान्तमिश्रशर्मणां पौत्रेण सुप्रसिद्ध-कोविदकुलप्रसूत-पण्डित-श्रीसन्तशरणमिश्रशर्मणां पुत्रेण व्याकरणाचार्य-साहित्यवारिधि-आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रिणा विरचितया 'शिवदत्ती'-हिन्दीव्याख्यया च सहिता बगलोपासनपद्धतिः समाप्ता ।

●

# क्षमा-प्रार्थना

यदक्षर पाठे जगदम्बिके ! मया
विसर्ग-बिन्द्वक्षर-हीनमीरितम् ।
तदस्तु सम्पूर्णतमं प्रसादतः
सङ्कल्प-सिद्धिश्च सदैव जायताम् ॥ १ ॥
मोहादज्ञानतो वा पठितमपठितं
साम्प्रतं ते स्तवेऽस्मिन् ।
तत्सर्वं साङ्गमास्तां भगवति वरदे !
त्वत्प्रसादात् प्रसीद ॥ २ ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ! ॥ ३ ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ! ॥ ४ ॥
यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद् गृहाणाऽनुकम्पया ॥ ५ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ! ।
यत्पूजितं मया देवि ! परिपूर्णं तदस्तु मे ॥ ६ ॥
अपराधशतं कृत्वा जगदम्बेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥ ७ ॥
अज्ञानाद् विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां देवि ! प्रसीद परमेश्वरि ! ॥ ८ ॥
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके ! ।
इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरु ॥ ९ ॥
कामेश्वरि ! जगन्मातः सच्चिदानन्दविग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ! ॥ १० ॥
यस्यार्थं पठितं स्तोत्रं तवेदं शङ्करप्रिये ! ।
तस्य देहस्य गेहस्य शान्तिर्भवतु सर्वदा ॥ ११ ॥

●

आचार्य पण्डित श्रीशिवदत्तमिश्र शास्त्री कृत-

# बगलामुखी-चालीसा

## दोहा

सिर नवाइ बगलामुखी, लिखूँ चलीसा आज।
कृपा करहु मोपर सदा, पूरन हो मम काज॥

## चौपाई

जय जय जय श्री बगला माता।
आदिशक्ति सब जग की त्राता॥ १॥
बगला सम तव आनन माता।
एहि ते भयउ नाम विख्याता॥ २॥
शशि ललाट कुण्डल छवि न्यारी।
अस्तुति करहिं देव नर-नारी॥ ३॥
पीतवसन तन पर तव राजै।
हार्थाहं मुद्गर गदा विराजै॥ ४॥
तीन नयन गल चम्पक माला।
अमित तेज प्रकटत है भाला॥ ५॥
रत्न-जटित सिंहासन सोहै।
शोभा निरखि सकल जन मोहै॥ ६॥

आसन पीतवर्ण महरानी ।
भक्तन की तुम हो वरदानी ।। ७ ।।
पीताभूषण पीतहिं चन्दन ।
सुर नर नाग करत सब वन्दन ।। ८ ।।
एहि विधि ध्यान हृदय में राखै ।
वेद पुराण सन्त अस भाखै ।। ९ ।।
अब पूजा विधि करौं प्रकाशा ।
जाके किये होत दुख-नाशा ।। १० ।।
प्रथमहिं पीत ध्वजा फहरावै ।
पीतवसन देवी पहिरावै ।। ११ ।।
कुंकुम अक्षत मोदक बेसन ।
अबिर गुलाल सुपारी चन्दन ।। १२ ।।
माल्य हरिद्रा अरु फल पाना ।
सबहिं चढ़ाइ धरै उर ध्याना ।। १३ ।।
धूप दीप कर्पूर की बाती ।
प्रेम-सहित तव करै आरती ।। १४ ।।
अस्तुति करै हाथ दोउ जोरे ।
पुरवहु मातु मनोरथ मोरे ।। १५ ।।
मातु भगति तव सब सुख खानी ।
करहु कृपा मोपर जनजानी ।। १६ ।।

त्रिविध ताप सब दुःख नशावहु ।
तिमिर मिटाकर ज्ञान बढ़ावहु ।। १७ ।।

बार-बार मैं बिनवउँ तोहीं ।
अविरल भगति ज्ञान दो मोहीं ।। १८ ।।

पूजनान्त में हवन करावै ।
सो नर मन वांछित फल पावै ।। १९ ।।

सर्षप होम करै जो कोई ।
ताके वश सचराचर होई ।। २० ।।

तिल तण्डुल संग क्षीर मिलावै ।
भक्ति प्रेम से हवन करावै ।। २१ ।।

दुःख दरिद्र व्यापै नहिं सोई ।
निश्चय सुख-संपति सब होई ।। २२ ।।

फूल अशोक हवन जो करई ।
ताके गृह सुख-सम्पति भरई ।। २३ ।।

फल सेमर का होम करीजै ।
निश्चय वाको रिपु सब छीजै ।। २४ ।।

गुग्गुल घृत होमै जो कोई ।
तेहि के वश में राजा होई ।। २५ ।।

गग्गुल तिल सँग होम करावै ।
ताको सकल बन्ध कट जावै ।। २६ ।।

बीजाक्षर का पाठ जो करहीं।
बीजमंन्त्र तुम्हरो उच्चरहीं ॥ २७ ॥
एकं मास निशि जो कर जापा।
तेहि कर मिटत सकल सन्तापा ॥ २८ ॥
घर की शुद्धभूमि जहँ होई।
साधक जाप करै तहँ सोई ॥ २९ ॥
सोइ इच्छित फल निश्चय पावै।
यामे नहिं कछु संशय लावै ॥ ३० ॥
अथवा तीर नदी के जाई।
साधक जाप करै मन लाई ॥ ३१ ॥
दस सहस्र जप करै जो कोई।
सकल काज तेहि कर सिधि होई ॥ ३२ ॥
जाप करै जो लक्षहिं वारा।
ताकर होय सुयश विस्तारा ॥ ३३ ॥
जो तव नाम जपै मन लाई।
अल्पकाल महँ रिपुहिं नसाई ॥ ३४ ॥
सप्तरात्रि जो जापहिं नामा।
वाको पूरन हो सब कामा ॥ ३५ ॥
नव दिन जाप करे जो कोई।
व्याधि रहित ताकर तन होई ॥ ३६ ॥

ध्यान करै जो वन्ध्या नारी।
पावै पुत्रादिक फल चारी ॥ ३७ ॥
प्रातः सायं अरु मध्याना।
धरे ध्यान होवै कल्याना ॥ ३८ ॥
कहँ लगि महिमा कहौं तिहारी।
नाम सदा शुभ मंगलकारी ॥ ३९ ॥
पाठ करै जो नित्य चलीसा।
तेहि पर कृपा करहिं गौरीशा ॥ ४० ॥

## दोहा

सन्तशरण को तनय हूँ, शिवदत्त मिश्र सुनाम।
देवरिया मण्डल बसूँ, धाम मझौली ग्राम ॥
उन्नीस सौ इकहत्तर सन् की, आश्विनशुक्ला मास।
चालीसा रचना कियो, तव चरणन को दास ॥

●

# श्री बगलामुखी की आरती

जय जय श्री बगलामुखी माता,
आरति करहुँ तुम्हारी ।। टेक ।।
पीत वसन तन पर तव सोहै,
कुण्डल की छबि न्यारी ।।जय जय०।।
कर-कमलों में मुद्‌गर धारै,
अस्तुति करहिं सकल नर-नारी ।।जय जय०।।
चम्पक माल गले लहरावे,
सुर नर मुनि जय जयति उचारी ।।जय जय०।।
धिविध ताप मिटि जात सकल सब,
भक्ति सदा तव है सुखकारी ।।जय जय०।।
पालत हरत सृजत तुम जग को,
सब जीवन की हो रखवारी ।।जय जय०।।
मोह-निशा में भ्रमत सकल जन,
करहु हृदय महँ तुम उजियारी ।।जय जय०।।
तिमिर नशावहु ज्ञान बढ़ावहु,
अम्बे तुमही हो असुरारी ।।जय जय०।।
सन्तन को सुख देत सदा ही,
सब जन की तुम प्राण पियारी ।।जय जय०।।
तव चरणन जो ध्यान लगावै,
ताको हो सब भव-भयहारी ।।जय जय०।।
प्रेम सहित जो करहिं आरती,
ते नर मोक्षधाम अधिकारी ।।जय जय०।।

## दोहा

बगलामुखी की आरती, पढ़ै सुनै जो कोय।
विनय है शिवदत्त मिश्र की, सुख-सम्पति सब होय ।।
इति बगलामुखी आरती समाप्त ।

# शिव-पंचदशी

जनपद देवरिया मण्डलान्तर्गत 'मझौली' ग्राम है,
जो विश्व-विश्रुत मल्लजन का चिर पुरातन धाम है।
इतिहास बतलाता यहाँ के नृपति ब्राह्मण भक्त थे,
यज्ञादि द्वारा ईश-चरणों में सदा अनुरक्त थे॥ १ ॥

पुर के अनेकों भाग थे जिनमें सवर्ण स्ववर्ग के,
सुविधा सहित नित लूटते आनन्द मानो स्वर्ग के।
उन विविध वर्णों में विशिष्ट पुनीत कश्यप वंश के,
सद्-विप्र सम्पूजित रहे चिर काल से हरि अंश के॥ २ ॥

भगवान् पुरुषोत्तम अदिति के गर्भ से संभूत हो,
गौरव दिया अपने पिता कश्यप अदिति के पूत हो।
बलि को मिला पाताल देवों को मिला सुरलोक था,
भगवान् वामन ने मिटाया इन्द्र का चिर शोक था॥ ३ ॥

ले जन्म प्रभु ने स्वयं कश्यप गोत्र को सम्मान दे,
वरवंश को उज्ज्वल किया था परम पावन मान दे।
कालान्तरों से विज्ञ, गरिमाशील, विद्या के धनी,
इस गोत्र के गौरव-शिरोमणि विप्रजन हैं अग्रणी॥ ४ ॥

अपनी अखण्ड सुकीर्ति से प्रख्यात जगती में सदा,
सम्पूज्य होते आ रहे सब काल में वे सर्वदा।
उनमें अलौकिक ज्ञान-गरिमा और बुद्धि-विवेक से,
सम्मान्य जो उस राजवंश सभासदों में एक थे॥ ५ ॥

मेरे पितामह पूज्यवर 'श्रीकान्त मिश्र' उदार थे,
आस्तिक-जनों में अग्रणी उत्कृष्ट विमल विचार थे।
दो तनय उनके 'सन्तशरण' व 'सत्यनारायण' रहे,
विद्या, विवेक, विनीत-अतिशय शील पारायण रहे॥ ६ ॥

अग्रज सुहृद् 'श्री सन्तशरण' विशिष्ट सद्-व्यवहार से,
सम्पूज्य थे वे सर्व-प्रियता के सुलभ सत्कार से।
आत्मज उन्हीं के हम हुए दो सौम्य सुन्दर वेश के,
जननी 'जयन्ती' की कृपा के पात्र स्नेह विशेष के।। ७ ।।

अग्रज हमारे सदय पण्डित 'जगन्नाथ' प्रसिद्ध थे,
जो चार पुत्रों के सहित सुविचार उत्कट सिद्ध थे।
'रामावतार' समेत शिष्टाचार चारु चरित्र से,
सम्मान्य लोकोत्तर गुणों से मान पा सद्मित्र से।। ८ ।।

'शिवदत्त' मैं उनका अनुज चिर भारती का दास हूँ,
रखता निरन्तर प्रेरणा-वश धर्म में विश्वास हूँ।
सद्ग्रन्थ लेखन ही व्यसन जीवन परिधि के बीच है,
सम्प्राप्त कर मातेश्वरी के चरण-रज का कीच है।। ९ ।।

रुचि रंजनी, श्रुति धर्म-सम्मत, लोकहित की दृष्टि से,
स्वान्तः सुखों के साथ माँ के करुण कोमल वृष्टि से।
सद्-प्रेरणा पाकर निरन्तर लेखनी चलती सदा,
जो भूरि भावों से भरी आनन्द वर्द्धति सर्वदा।।१०।।

अब तक शताधिक ग्रन्थ-रत्नों से स्व-पाठक वृन्द को,
कृतकार्य हूँ रुचि धर्म-पथ में भी बढ़ा आनन्द को।
समवाय सेवा-व्रत विमल सद्ग्रन्थ सम्मत धर्म के,
व्यवसाय अपना बन गया है एकमात्र सुकर्म के।।११।।

दो पुत्रियाँ सौभाग्यशीला, स्नेह की प्रतिमूर्ति हैं,
जो उभय कुल की लाज-मर्यादा प्रतिष्ठा-पूर्ति हैं।
इनमें परम विदुषी सुशीला, शान्त 'सावित्री' भली,
सद्वर विवेकी 'सत्यव्रत जी' को समर्पित निश्छली।।१२।।

'पुष्पा' कनिष्ठा कलित कर्मों सहित गेह उजागरी,
श्री वर 'रमेश' निदेश की परिपालिका गुण आगरी।

स्वजनों सहित सन्तान सेवा साधना सद्धर्म में-
रहतीं निरत सब काल वे गृहिणी सुलभ सत्कर्म में ।।१३।।

विश्वेश की अनुपम कृपा, माँ अन्नपूर्णा की दया,
पाकर अबाधित रूप से सद्ग्रन्थ लिखता हूँ नया।
है देन उनकी ही उन्हीं को यह समर्पित आज है,
अच्छा-बुरा जो कुछ बना है यह उन्हीं की लाज है ।।१४।।

सहृदय जनों के हाथ यह 'शिवदत्त' शुभप्रद फूल है,
अघराशि-नाशक उर-प्रकाशक दिव्य गुण का मूल है।
विश्वास है, समुदार पाठक-वृन्द के सद्भाव से,
होगा समादृत ग्रन्थ यह उनके मनन से चाव से ।।१५।।

इति शिव-पंचदशी समाप्त ।

# बगलामुखी पूजन-सामग्री

केशर, चन्दन
रोरी, सिन्दूर
मौली, धूपबत्ती
रूई
पान, सोपाड़ी
चावल, ऋतुफल, पुष्पमाला
अनेक तरह के पीले पुष्प
तुलसी, दूर्वा
कपूर
रुद्राक्षमाला, आसन
पंचपात्र
आचमनी
तष्टा, अर्घा
नारियल, गिरिगोला
हल्दी की बुकनी
हल्दी की माला
यज्ञोपवीत
गंगाज
नवग्रह
हवन के
तिल, ज

बगलामुखी (पीताम्बरा) के लिए
पीलावस्त्र, टिकुली, आभूषण आदि
अबीर, बुक्का
पंचामृत
बालू
पेड़ा, बतासा, बेसन का लड्डू
वरण सामग्री
भगवती बगला की मूर्ति
बगलायन्त्र
सुगन्धित द्रव्य
चौकी १, पीढ़ा २
सफेद कपड़ा, लाल कपड़ा
सुतरी
केले का खम्भा, बन्दनवार
दियासलाई
कलश

र

डार

# हमारे यहाँ की प्रकाशित पुस्तकें एक बार मँगाकर अवश्य पढ़ें।

| पुस्तक | मूल्य |
|---|---|
| श्रीसूक्त-पुरुषसूक्त भा०टी० | १५) |
| शिवमहापुराण भाषा ग्लेज | २००) |
| चाणक्यनीतिदर्पण भा०टी० | २०) |
| रामायण मध्यम भा०टी० | २५०) |
| रामायण मध्यम मूल दोहा चौपाई | [illegible]) |
| वाल्मीकीय रामायण भाषा | [illegible]) |
| अध्यात्म रामायण भा०टी० | २००) |
| आनन्द रामायण भाषा | २००) |
| राधेश्याम रामायण | ८०) |
| महाभारत भाषा टीका | [illegible]००) |
| हरिवंश पुराण (भाषा) | [illegible]) |
| भृगुसंहिता भाषा | [illegible]) |
| प्रेमसागर | [illegible]) |
| श्रीमद्भागवत महापुराण भा०टी० साँची | ५००) |
| श्रीमद्देवीभागवत भा.टी. साँची | ६००) |
| सुखसागर भाषा मध्यम | २००) |
| दुर्गार्चन-पद्धति भा०टी० | १००) |
| दुर्गासप्तशती भा०टी० सजिल्द ( मोटे अक्षरों में ) | ६०) |
| दुर्गा सप्तशती भा०टी० | २५) |
| दुर्गा सप्तशती भाषा ग्लेज | २०) |
| दुर्गा सप्तशती ३२ पेजी मूल | २५) |
| दुर्गा सप्तशती ६४ पेजी मूल | २०) |
| दुर्गाकवच भा०टी० | ८) |
| दुर्गाकवच ३२ पेजी मूल | ५) |
| दुर्गा रामायण | १५) |
| मन्त्र-सागर भाषा टीका | ७५) |
| बगलोपासनपद्धति-बगलामुखी-रहस्य भाषा टीका | ४०) |
| दत्तात्रेय तन्त्र-भाषा टीका | २०) |
| उड्डीश तन्त्र भाषा टीका | २०) |
| रसराजमहोदधि पाँचों भाग | २००) |
| बृहत्पाराशरहोराशास्त्र भा.टी. | २००) |
| मानसागरी भा०टी० | १००) |
| जातकाभरण भाषा टीका | ८०) |
| बृहज्ज्यौतिषसार भाषा टीका | ७५) |
| ताजिक नीलकण्ठी भाषा टीका | ७५) |
| कर्मविपाक संहिता भाषा टीका | ७५) |
| चमत्कार चिन्तामणि भाषा टीका | ८) |
| भावकुतूहल भाषा टीका | ७५) |
| मुहूर्तचिन्तामणि भाषा टीका | ६०) |
| लग्नचन्द्रिका भाषा टीका | ४०) |
| घाघ-भड्डरी की कहावतें भा०टी० | २५) |
| विश्वकर्मा प्रकाश भाषा टीका | ७५) |
| स्त्री जातक भाषा टीका | [illegible]) |
| शीघ्रबोध भाषा टीका | २०) |
| शिव स्वरोदय भाषा टीका | २०) |
| प्रभुविद्या प्रतिष्ठार्णव ( सर्वदेव प्रतिष्ठा मयूख ) | २५०) |
| कुण्ड निर्माण स्वाहाकार पद्धति | ६०) |
| विष्णुयाग पद्धति भाषा टीका | २००) |
| विवाह पद्धति भाषा टीका | २५) |
| उपनयन पद्धति भाषा टीका | २५) |
| वाशिष्ठी हवन पद्धति भाषा टीका | २५) |
| गणपति प्रतिष्ठा पद्धति भाषा टीका | २५) |
| धनिष्ठादि पञ्चक शान्ति भा०टी० | २०) |
| संकष्टी गणेश चतुर्थी व्रत कथा भा.टी. | ६०) |
| वृहद चालीसा पाठ संग्रह | ३०) |
| श्रीगीतगोविन्दम् (भा.टी.) | ३०) |
| एकादशी माहात्म्य भाषा | १५) |
| कार्तिक माहात्म्य भाषा | १५) |
| कार्तिक माहात्म्य भाषा टीका | ६०) |
| हनुमद्-रहस्य भाषा टीका | ६०) |
| गायत्री-रहस्य भाषा टीका | ६०) |
| बृहत्-स्तोत्र रत्नाकर बड़ा | १००) |
| रघुवंश महाकाव्य प्रथम सर्ग | १५) |
| हितोपदेश मित्रलाभ भाषा टीका | २०) |
| किरातार्जुनीयम् १-२ सर्ग भा०टी० | १५) |
| सोरठी बृजाभार ९६ भाग | ७५) |

प्रकाशक :- **श्री ठाकुर प्रसाद पुस्तक भण्डार**
कचौड़ीगली, वाराणसी-१, फोन (०५४२) २३९२५४३, २३९२४७१